# भागवृत्ति-संकलनम्

भर्तृहर्युपनामकेन विमलमतिना विरचिता

अष्टाध्याय्याः प्राचीना वृत्तिः



सम्पादकः—युधिष्ठिर मीमांसक

ओ३म्



# भागवृत्ति-संकलनम्



भर्तृहर्युपनामकेन विमलमतिना विरचिताया

अप्राप्यमाणाया भागवृत्त्याख्याया अष्टाध्यायी-वृत्त्या

उद्धरणानां संकलनम्



संकलयिता—

युधिष्ठिरो मीमांसकः

प्रकाशकः—

संचालकः—भारतीय-प्राच्यविद्या-प्रतिष्ठानम्

३१।१४४ अलवर गेट, अजमेर

मुद्रकः—

श्रीकृष्ण असावा, गायत्री मुद्रण, अजमेर

प्रथमवार ५०० ] संवत् २०२१ [ मूल्यम् ३-००

# भारतीय-प्राच्यविद्या-प्रतिष्ठान

## उद्देश्य

इस संस्था के उद्देश्य "भारतीय प्राचीन वाङ्मय का अन्वेषण, रक्षण और प्रसार" है।

## कार्य-क्रम

उपर्युक्त उद्देश्यों की पूर्ति के लिए प्रतिष्ठान के कार्यक्रम को निम्न विभागों में बांटा गया है—

१—भारतीय प्राचीन वाङ्मय का अनुसन्धान।

२—भारतीय प्राचीन वाङ्मय के अनुसन्धान द्वारा विभिन्न विषयों पर मौलिक ग्रन्थों तथा निबन्धों का लेखन और प्रकाशन।

३—भारतीय वाङ्मय के विविध विभागों के इतिहास तथा भारत के प्राचीन इतिहास सम्बन्धी ग्रन्थों का लेखन और प्रकाशन।

४—भारतीय प्राचीन वाङ्मय का शुद्ध सम्पादन तथा प्रकाशन।

५—भारतीय प्राचीन वाङ्मय का राष्ट्रभाषा ( हिन्दी ) में प्रामाणिक अनुवाद।

६—संस्कृत वाङ्मय तथा इतिहास सम्बन्धी गवेषणात्मक त्रैमासिक "पत्रिका" का प्रकाशन।

७—उपर्युक्त कार्य-क्रम की पूर्ति के लिए "बृहत् पुस्तकालय" का निर्माण।

८—प्राचीन वाङ्मय की रक्षा और प्रसार के लिए 'साङ्गवेद-विद्यालय' का संचालन।

९—उद्देश्यों की पूर्ति करने हारे विशिष्ट साहित्य के प्रचार के लिए 'विक्रय-विभाग' का संचालन।

विशेष विवरण के लिए "प्रतिष्ठान की योजना, कार्यक्रम तथा कृतकार्य-विवरण" पुस्तिका विना मूल्य मंगवाइये।

पता—भारतीय-प्राच्यविद्या-प्रतिष्ठान,
३१।१४४ अलवर गेट, अजमेर।

# किञ्चित् प्रास्ताविम्

पाणिनीय-व्याकरण-वाङ्मये सर्वासूपलब्धासु वृत्तिषु काशिकाया एव प्राधान्य-मित्यत्र नास्ति कश्चिद् विवादावसरः। काशिकाया अनन्तरं भागवृत्तेः स्थानं वर्तते। इयं भागवृत्तिर्यद्यपि सम्प्रति नोपलभ्यते तथापि कोशव्याकरणादिविविधविषयकेषु ग्रन्थेष्वस्याः प्राचुर्येणोद्धरणानामुपलम्भात् स्पष्टमवगम्यते यत् कस्मिंश्चित् कालेऽस्या व्याकरणवाङ्मये महती प्रतिष्ठा प्रामाणिकता चासीदिति। अस्याः संपुष्टिः पुरुषोत्तम-देवविरचित-भाषावृत्तेरधोलिखितपद्येनापि भवति—

काशिकाभागवृत्त्योश्चेत् सिद्धान्तं बोद्धुमस्ति धीः[1]।
तदा विचिन्त्यतां[2] भ्रातर्भाषावृत्तिरियं मम॥[3] इति।

सत्यप्येवमस्याः सम्प्रत्यनुपलम्भो महादाश्चर्यं जनयति। विक्रमार्कस्य सप्तदशशताब्द्या उत्तरार्धे वर्तमानस्य[4] महाविदुषः कवीन्द्राचार्यस्य पुस्तकालयस्य सूचीपत्रे तृतीय-पृष्ठेऽस्या वृत्तेरुल्लेखदर्शनात् सिद्धान्तकौमुद्यां[5] शब्दकौस्तुभे[6] चास्या असकृदुद्धरणाना-मुपलम्भाद् विक्रमस्य सप्तदशशताब्दीं यावदस्याः कोशग्रन्थाः (हस्तलेखाः) सुप्राप्या आसन्निति निश्चीयते। अतः संभाव्यते, कृते प्रयत्ने सम्प्रत्यप्यस्या हस्तलेखा आसा-द्येरन्निति।

अस्माभिर्विदुषां कृते भागवृत्तेरुपयोगितां विज्ञायानेकेभ्यो मुद्रितहस्तलिखितग्रन्थे-भ्योऽस्या उद्धरणानि संकलितानि। एतेनोद्धरणसंकलनकार्येण न केवलं वैयाकरणाना-मेव ज्ञानवृद्धिर्भविष्यति, अपि तु पुरातत्त्वविदां, विशेषतो भाषाविज्ञानविदुषामपि महान् लाभो भविष्यतीति निश्चितमेव।

## भागवृत्ते रचयिता

पुरुषोत्तमदेवविरचितभाषावृत्तेर्व्याख्यात्रा सृष्टिधराचार्येण पूर्वनिर्दिष्टश्लोकव्या-ख्याने—"वलभीनगरस्य राज्ञः श्रीधरसेनस्याज्ञया भर्तृहरिणा भागवृत्ति-र्विरचिता" इत्युक्तम्।[7] कातन्त्रपरिशिष्टकृता श्रीपतिदत्तेन "विमलमतिनामकेन

---

१ 'व्याख्यातुं मतमस्ति धीः' इति पाठान्तरम्।

२ 'तदा विलोक्यताम्' इति पाठान्तरम्। ३ भाषावृत्तिः [ ७।४।६८ ]।

४ द्रष्टव्योऽस्मद्विरचितः 'संस्कृत व्याकरणशास्त्र का इतिहास' नामा ग्रन्थः, भाग १, पृ० ४३२ टि० ३ ( द्वि० सं० )

५ सिद्धान्तकौमुदी—पृ० ३६६। ६ शब्दकौस्तुभः [ ४।१।१० ]।

७ भागवृत्तिर्भर्तृहरिणा श्रीधरसेननरेन्द्रादिष्टा विरचिता।
[ भाषावृत्तिविवृतिः ८।४।६८ ]

केनचिद् विदुषेयं भागवृत्तिर्विरचिता" इत्युक्तम् ।[१]

सत्यप्येवं प्रमाणद्वैधे न वयमत्र कञ्चन विरोधं पश्यामः । अयं भागवृत्तिकारो भर्तृहरिस्तत्रभवतो वेदविदामलङ्कारभूतात् प्रमाणितशब्दशास्त्राद्[२] वाक्यपदीयकर्तुः महाभाष्यव्याख्यातुश्च प्रसिद्धाद् भर्तृहरेरन्य एव । यथा हि शाकुन्तलनाटकस्य कर्तुर्महाकवेः कालिदासाद् भिन्नो रघुवंशादीनां विरचयिता समुद्रगुप्तस्य सभ्यो महाकविर्हरिषेणोऽपि तादृशकाव्यनैपुण्यात् कविषु कालिदासनाम्ना प्रसिद्धिं गत[३]स्तथा भागवृत्तेः कर्त्ता विमलमतिरपि स्वस्यासाधारणव्याकरणवैदुष्याद् भर्तृहरिनाम्ना प्रथितोऽभूदिति वयमनुमिनुमः ।

अपि च साहित्यग्रन्थेषु यथा त्रयः कालिदासाः प्रसिद्धा[४]स्तथा वैयाकरणवाङ्मयेऽपि त्रयो भर्तृहरयो बभूवुः । तत्र प्रथमः—वाक्यपदीयस्य कर्ता महाभाष्यस्य व्याख्याताऽन्येषां च बहूनां ग्रन्थानां विरचयिता पदवाक्यप्रमाणज्ञो भगवान् भर्तृहरिः ।[५] द्वितीयः—भट्टिकाव्यस्य विरचयिता महाकविर्भर्तृहरिः ।[६] तृतीयः—भागवृत्तेः कर्ता विमलमतिनामा महावैयाकरणो भर्तृहरि । एषु प्रथमस्य भर्तृहरिरिति मुख्यं नाम, अपरयोस्त्वौपमिकम् । तत्राद्यो भर्तृहरिर्विक्रमस्य चतुर्थशताब्द्यां ततः पूर्वतनो वाऽऽसीदिति सुनिश्चितम् ।[७] वयं तु विक्रमस्य प्रथमशताब्द्यामाद्यो भर्तृहरिर्बभूवेति स्वीकुर्मः । भट्टिकाव्यस्य रचना वलभ्यास्तृतीयस्य श्रीधरसेनस्य राज्य-

---

१ तथा च भागवृत्तिकृता विमलमतिनाप्येष निपातितः ।

[ कातन्त्रपरिशिष्टं सन्धिप्रकरणम् ]

२ द्रष्टव्यम्—यस्त्वयं वेदविदामलङ्कारभूतो वेदाङ्गत्वात् प्रमाणितशब्दशास्त्रः सर्वज्ञम्मन्य उपमीयते तेन ( भर्तृहरिणा ) कथमेतत् प्रयुक्तम् ।

[ गणरत्नमहोदधिः–पृ० १२३ ]

३ द्रष्टव्यं कृष्णचरितस्य राजकविवर्णनम्

[ श्लोकाः १५–१६, २३–२६ । पृ० ५–७ ]

४ एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ।। [ राजशेखरः ]

५ एतस्य विषये विस्तरेणास्मद्विरचिते 'संस्कृत व्याकरणशास्त्र का इतिहास'-नाम्नि ग्रन्थे [ भाग १, पृ० ३३८-३६३, द्वि० सं० ] द्रष्टव्यम् ।

६ भट्टिकाव्यस्य जयमङ्गलाव्याख्याकारं विहायान्ये सर्वेऽपि व्याख्याकृतो भट्टिकाव्यं भर्तृहरिविरचितमिति मन्यन्ते । तथैव पञ्चपाद्युणादिवृत्तिकारः श्वेतवनवासी [ पृ० ८३, १२६ ], हरिनामामृतवृत्तिकारश्च [ सू० १४६३ ] । एतद्विषये 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे [भाग २, पृ० ३८५-३८८] द्रष्टव्यम् ।

७ 'संस्कृत व्याकरणशास्त्र का इतिहास'-नामा ग्रन्थो द्रष्टव्यः ।

[ भाग १, पृ० ३४०-३४६ द्वि० सं० ] ।

काले ( विक्रमार्कस्य ६६० संवत्सरात् ६७७ संवत्सरपर्यन्तम् ) बभूव ।[१] भागवृत्त रचना चतुर्थस्य श्रीधरसेनस्य राज्ये ( विक्रमार्कस्य ७०२ संवत्सरात् ७०५ संवत्सर-पर्यन्तम् ) अभूत् । एतच्च सर्वमस्माभिरन्यत्र विस्तरेणोपपादितमिति[२] नात्र पुनः पिष्ट-पेषणं क्रियते ।

## भागवृत्तिनाम्नः कारणम्

अस्या वृत्तेः प्रागष्टाध्याय्या यावत्यो वृत्तयो निष्पन्नास्तास्वष्टाध्याय्याः सर्वाणि सूत्राणि तत्क्रममनुरुन्ध्यैव यथास्थानं व्याख्यातान्यासन् । अस्यामेव वृत्तौ सर्वप्रथमं लौकिकवैदिकसूत्राणि द्विधा विभज्य ग्रन्थकर्तुः क्रममुल्लङ्घ्य पृथक् पृथग् व्याख्या-तानि ।[३] अत एवास्याः "भागवृत्तिः" इत्यन्वर्था संज्ञाऽभूत्, तत्प्रतिपक्षभूतायाः काशिकायाश्चैकवृत्तिरिति ।[४] स्वरवैदिकप्रकरणस्य लौकिकवैदिकसामान्यनियमेभ्यः पार्थक्यं सर्वप्रथमं चन्द्रगोमिना विहितम् ।[५] मन्ये भागवृत्तिकारस्तमेवानुससार ।

## भागवृत्तेर्वैशिष्ट्यम्

इयमेवैका सर्वप्राचीनैतादृशी वृत्तिर्वर्तते या महाभाष्यमेकान्ततया प्रमाणीकृत्य पदानां साधुत्वमसाधुत्वं वाऽऽचष्टे । अत एवात्र कानिचिदलौकिकान्यपि पदान्यन्वा-ख्यायन्ते । तद्यथा—

**भागवृत्तिकारस्त्वाह—"....अनभ्यासग्रहणस्य तु न किञ्चित् प्रयोजन-मुक्तम् । ततश्चोत्तरार्थमपि तन्न भवतीति भाष्यकारस्याभिप्रायो लक्ष्यते । तेनात्र भवितव्यमेव द्विर्वचनेनेति ।"** [ पदमञ्जरी भा० २, पृ० ४२६ ]

तदेवं भागवृत्तिकारमते लोलूयतेः सनि 'लुलोलूयिषते' इति रूपं भवति । लोलूयतेः सनि पुनर्द्वित्वं गुणनन्दि-पाल्यकीर्ति-हेमचन्द्राचार्यवर्जं नान्ये वैयाकरणाः स्वीकुर्वते ।

---

१ सं० व्या० शास्त्र का इतिहास, भाग २, पृष्ठ ३८८-३९० ।

२ ओरियण्टल कालेज मेगजीन, लाहौर [ नवम्बर १९४० ] पत्रिकायाम-स्मदीये लेखे, 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे [ भाग १, पृ० ३३३-३३४ ]

३ अत एव भाषावृत्तौ भाषाभागे भागवृत्तिकृद् भाषावृत्तिकारश्च क्वसुकानज-विधानलक्षणं न लक्षितवान्' इति गोयीचन्द्रः । [ द्र० ओरियण्टल कान्फ्रेन्स बना-रस लेखसंग्रह, भाग २, पृ० २७८ । 'अथवैतन्न वक्तव्यं छान्दसत्वात् । अत एव भागवृत्तौ भाषाभागे नास्त्येतत् । [ संक्षिप्तसारटीका–सन्धि० १९० ]

४ अनार्ष इत्येकवृत्तावुपयुक्तम् [ भाषावृत्तिः १।१।१६ ] । अस्या विवृतौ— 'एकवृत्ताविति काशिकायां वृत्तावित्यर्थः....सा हि द्वयोर्विवरणकर्त्री' इति सृष्टिधरः ।

५ द्र० सं० व्या० शास्त्र का इतिहास, भाग १, पृष्ठ ५२३-५२७ ॥

एतेऽप्याचार्या एकेषां मत एव पुनर्द्वित्व विदधति (द्र० भागवृत्ति सं० पृ० ३१ टि० १)। मन्येऽत्रैकेषां पदेन भागवृत्तिकार एवाभिप्रेतः स्यात्। अपि च यत्र काशिकावृत्तिर्महाभाष्यानुक्तं महाभाष्यविरुद्धं वा यद्यन्मतं व्याकरणान्तरेभ्यः संगृह्णाति, तत्र सर्वत्रैवेयं महाभाष्यैकशरणा भागवृत्तिर्नामनिर्देशपुरःसरं तन्मतं प्रत्याचष्टे। एतेन विस्पष्टं प्रतीयते यद् भागवृत्ते रचना काशिकावृत्तेः प्रत्याख्यानायैवाभूदिति।

सत्यप्येवमियं भागवृत्तिर्वैयाकरणनिकाये परं प्रामाण्यपदवीमधिष्ठितेति पूर्वोद्धृतेन भाषावृत्तिश्लोकेन शतश उद्धरणानां चोपलम्भनेन स्पष्टमेव प्रतीयते।

## भागवृत्तेर्व्याख्याता श्रीधरः

भागवृत्तेरेकस्यैव व्याख्यातुः श्रीधरस्य नाम सम्प्रति विदितमस्ति। एतस्यापि च नाम केवलं 'दैव'ग्रन्थस्य लीलाशुकमुनिविरचितायां पुरुषकारनामिकायां टीकायामेवोपलभ्यते।[1]

अयं श्रीधरः कं वंशं देशं कालं च स्वजनुषालञ्चकारेति न किञ्चिद् विज्ञायते। दैवपुरुषकारटीकातः केवलमेतावत् प्रतीयते यदयं श्रीधरस्तन्त्रप्रदीपसंज्ञकाया न्यास-व्याख्यायाः कर्तुर्मैत्रेयरक्षितात् पूर्वतन आसीदिति।[2] तन्त्रप्रदीपस्यानुमानिकः कालः ११४० वैक्रमाब्दात् ११६५ वैक्रमाब्दपर्यन्तमासीदित्यस्माभिः स्वीये 'संस्कृत व्याकरणशास्त्र का इतिहास'-नाम्नि ग्रन्थे प्रतिपादितम्।[3] अतः श्रीधरो विक्रमार्कस्य द्वादशशताब्दया उत्तरार्धात् पूर्वभावीत्येव सामान्येन वक्तुं शक्यते।

## भागवृत्तेरुद्धरणानां संकलनम्

अस्माभिः संस्कृतव्याकरणशास्त्रैतिह्यलेखनाय व्याकरणविषयकाणि प्रायेण सर्वाणि मुद्रितानि बहूनि च हस्तलिखितानि, शतशोऽन्यविषयकाणि च पुस्तकान्यक्षरशः पठितानि। तस्मिन्नेव काले भागवृत्तेर्यान्युद्धरणानि यत्र क्वचिदप्युपलब्धानि तानि संगृह्य यथाक्रमं संकलितानि।

### प्रथमं संकलनम्

भागवृत्तेः प्रथमं संकलनमस्माभिर्लवपुरनगरस्थपञ्जाबविश्वविद्यालयस्य 'ओरियण्टल कालेज मेगजीन' नामिकायाः पत्रिकाया १९४० तमस्य क्रैस्ताब्दस्य नवम्बर-मासस्याङ्के प्रकाशितम्। तत्र ६८ अष्टषष्टिसूत्रेषु ९० नवत्युद्धरणानि, सप्त चानिश्चितस्थानान्याहृत्य ९७ सप्तनवत्युद्धरणान्यासन्।

---

१ भागवृत्तौ तु 'सीकृ सेकृ' इत्यधिकमपि पठ्यते। तच्च 'सीकृ सेचने' इति श्रीधरो व्याकरोत्, 'एतानष्टौ वर्जयित्वा' इति चाधिक्यमेव मुक्तकण्ठमुक्तवान् [पृ० १४-१५, अस्मत्संस्करणात्म्]।

२ दैवम् [पृ० ६०, अस्मत्संस्क०]। ३ भाग १, पृ० ४३५-४३६ द्वि० सं०।

## द्वितीयं संकलनम्

गच्छति च कालेऽनेकेषां पूर्वमनुपलब्धानाममुद्रितानां च ग्रन्थानाम् उपलम्भान्मुद्रणाच्च भागवृत्त्युद्धरणसंकलने महती वृद्धिरभूत् । तान् पुनर्यथास्थानं संकलय्य २०१० वैक्रमाब्दे काशीस्थसरस्वतीभवनस्य सारस्वती-सुषमाख्यायां पत्रिकायां द्वितीयमुपबृंहितं संकलनं प्रकाशितम् । तत्र १२० विंशत्युत्तरशतसूत्रेषु, १८४ चतुरशीत्युत्तरशतमुद्धरणानि, षट् चानिश्चितस्थानान्याहत्य १९० नवत्युत्तरशतमुद्धरणानि संगृहीतान्यभूवन् ।

## तृतीयं संकलनम्

तदेवं गच्छति काले पुनः केषांचिदुद्धरणानामुपलम्भात् ग्रन्थस्य गौरवातिशयाच्चास्य पृथक् ग्रन्थरूपेण प्रकाशनस्य मदीया महती मनीषाऽऽसीत्, परन्तु कार्यबाहुल्यात् साधनानां चाभावान्नाद्य यावदस्य ग्रन्थरूपेण मुद्रणे समर्थो नाभूवम् । सम्प्रति यथाकथंचित् प्रयतमानेन मयास्य मुद्रणं विधीयते । अत्र १२९ सूत्रेषु १९२ उद्धरणानि ६ अनिश्चितस्थानानि चाहत्य १९८ संख्यकान्युद्धरणानि प्रकाश्यन्ते ।

आशासे महता प्रयत्नेन दैर्घकालिकाध्ययनेन च संगृहीतानां भागवृत्तेरुद्धरणानामिदं संकलनं विदुषां विशेषतो वैयाकरणमहानुभावानां तावन्मनस्तोषाय भविष्यति यावदस्या वृत्तेः कश्चित् कोशो नोपलभ्यते ।

## भागवृत्तिवचनोद्धर्तॄणां ग्रन्थानां नामानि

६

अस्मिन् संकलने येभ्यो मुद्रितेभ्यो हस्तलिखितेभ्यश्च ग्रन्थेभ्यो भागवृत्तेरुद्धरणानि संगृहीतानि तेषां नामान्यधो निर्दिश्यन्ते । तत्र बहुत्रमुद्रितानां ग्रन्थानां यस्मात् संस्करणादुद्धरणसंकलनं व्यधायि तस्यापि निर्देशः करिष्यते ।

**तत्र मुद्रितग्रन्थाः—**

१ महाभाष्यप्रदीपः ( कैयटस्य ), अ० १-२ निर्णयसागर बम्बई, अ० ३-८ गुरुप्रसाद शास्त्री सं० काशी ।

२ महाभाष्यप्रदीपोद्योतः ( नागेशस्य ), अ० १-२ निर्णयसागर बम्बई, अ० ३-८ गुरुप्रसाद शास्त्री सं० काशी ।

३ पदमञ्जरी ( हरदत्तस्य ), लाजरस प्रेस काशी ।

४ भाषावृत्तिः ( पुरुषोत्तमदेवस्य ) ।

५ दुर्घटवृत्तिः ( शरणदेवस्य ), त्रिवेन्द्रम् प्रथमं सं० ।

६ दैवम्-पुरुषकारवार्तिकोपेतम्, अजमेर ।
पुरुषकार-नाम्नाप्यस्यास्माभिः क्वचिन्निर्देशः कृतः ।

७ परिभाषावृत्तिः ( सीरदेवस्य ), काशी ।

८ ,, ,, ( पुरुषोत्तमदेवस्य ), राजशाही सं०

९ उणादिवृत्तिः ( श्वेतवनवासिनः ), मद्रास ।
१० ,, ,, ( उज्ज्वलदत्तस्य ), कलकत्ता ।
११ धातुवृत्तिः ( सायणस्य ), चौखम्बा संस्कृत सीरिज, काशी ।
१२ ज्ञापकसमुच्चयः ( पुरुषोत्तमदेवस्य ) राजशाही ।
१३ सिद्धान्तकौमुदी ( भट्टोजिदीक्षितस्य ), निर्णयसागर बम्बई ।
१४ प्रक्रियाकौमुदी ( सटीका ) ।
१५ व्याकरणसिद्धान्तसुधानिधिः ( विश्वेश्वरसूरिणः ), काशी ।
१६ संक्षिप्तसारः ( क्रमदीश्वरप्रणीतस्य जुमरनन्दिनो वृत्तिः ।
१७ संक्षिप्तसारटीका ।
१८ कातन्त्रपरिशिष्टम् ( श्रीपतिदत्तस्य ) ।
१९ हरिनामामृत-व्याकरणम् ।
२० नानार्थार्णवसंक्षेपः ( केशवस्य ) ।
२१ अमरटीकासर्वस्वम् ( सर्वानन्दस्य ) ।
२२ हेतुबिन्दुटीकालोकः ( दुर्वेकमिश्रस्य ) ।
२३ शब्दशक्तिप्रकाशिका, काशीसंस्करणम् ।
२४ व्याकरण दर्शनेर इतिहास ( गुरुपद हालदार कृतम् ) ।

हस्तलिखितग्रन्थाः—

१ तन्त्रप्रदीपः ( मैत्रेयरक्षितस्य ) ।
२ अमरटीका ( अतिर्ज्ञातकर्तृका ) ।
३ ,, ,, ( रायमुकुटस्य )
४ शब्दसाम्राज्यम् ।
५ चर्करीत-रहस्यम् ।
६ संक्षिप्तसारपरिशिष्टम् ।
७ कातन्त्रप्रदीपव्याख्या ( पुण्डरीकविद्यासागरकृता नञ्वादव्याख्या ) ।
८ तत्त्वचन्द्रिका ( गदसिंहकृता किरातार्जुनीयस्य टीका ) ।
९ भाषावृत्त्यर्थविवृतिः ( सृष्टिधराचार्यस्य )

अन्ये सहायका ग्रन्थाः—

१ ओरियण्टल कान्फ्रेंस बनारस, लेखसंग्रह ।
२ इण्डिया आफिस लन्दन-हस्तलेखसंग्रहस्य सूचीपत्रम् ।
३ मद्रास राजकीय हस्तलेखसंग्रहस्य सूचीपत्रम् ।
४ मद्रास ओरियण्टल रिसर्च जर्नल ।

तदेवमाहृत्य ( २४+९+४=३७ ) सप्तत्रिंशद्ग्रन्थेभ्यो भागवृत्तेरुद्धरणानि संकलितानि ।

तत्र षोडशसंख्यातः एकोनविंशतिपर्यन्तानां चतुर्णां ग्रन्थानां वाङ्गाक्षरमुद्रितानाम् उद्धरणानि तत्र श्रीमता रामशंकरभट्टाचार्येण संगृह्य प्रत्तानि । हस्तलेखग्रन्थानामुद्धरणानि तु विविधग्रन्थेभ्यः पत्रिकाभ्यश्च संगृहीतानि । सर्वत्र चैषां पूर्ण उलब्धिस्थान-निर्देशो व्यधायि ।

यदि तन्त्रप्रदीपस्य मुद्रणं भवेत्तर्हि तस्माद् बहूनि भागवृत्त्युद्धरणान्युपलवन्धुं शक्यन्ते ।

## उपसंहारः

इमान्युद्धरणानि पठित्वा तत्र कश्चिन्महानुभावो भागवृत्तेरुपलब्धये प्रयतमानो ग्रन्थमिमुपलभ्येत तर्हि संस्कृतवाङ्मयस्य विशेषतो व्याकरणवाङ्मयस्य महत्या सेवया तस्य जनुषः साफल्यं स्यात् । मया तु प्रयतमानेनापि पञ्चविंशतिवर्षेषु न क्वचिदस्य ग्रन्थस्य कश्चित् कोष उपलब्धः । सत्यप्येवमद्याप्यहमस्मिन् विषये नैराश्यं नाधिगतोऽस्म्यतोऽस्य ग्रन्थस्य प्राप्तिरवश्यं कदाचिद् भवितेति निश्चीयते ।

गायत्री-मुद्रणस्य स्वामिना असावोपनामकेन श्रीकृष्णमहोदयेन महता प्रयत्नेनास्य ग्रन्थस्य मुद्रणं व्यधायि । तथापि गायत्रीमुद्रणस्य प्रारम्भिकावस्थाकारणाद् इह काश्चन त्रुटयोऽपि सम्भाव्यन्ते । आशासे ताः क्षान्त्वा तत्र भवन्तो विद्वांसोऽस्मात् सारमादाय सन्तोषं लप्स्यन्ते ।

## विशिष्टाऽभ्यर्थना

सप्तदशे पृष्ठे प्रथमटिप्पण्यास्तृतीयपङ्क्त्याः त्रयस्त्रिंशे पृष्ठे चतुर्विंशपङ्क्तौ च कश्चन पाठो प्रचलता मुद्रणयन्त्रेण नाशितः (अतः केषुचित् पुस्तकेषु नोपलभ्यते) । तत्पूर्त्त्यर्थं ग्रन्थान्ते परिवर्तनपरिवर्धन-संशोधन-पत्रम् अवश्यं द्रष्टव्यम् । तत्र केषांचिदपपाठानां संशोधनम्, मुद्रणानन्तरोपलब्धानामुद्धरणानां निवेशश्च कृतः ।

**भारतीय प्राच्यविद्या प्रतिष्ठानम्**
**३१।१४४ अलवर गेट, अजमेर**

विदुषां वशंवदः—
युधिष्ठिरो मीमांसकः

ओम्

# अथ भागवृत्तिसङ्कलनम्

## १–ईदूदेद्द्विवचनं प्रगृह्यम् । ( १।१।११ )

( १ ) ( 'मणीव' इत्यादौ प्रगृह्यसंज्ञाप्रतिषेध इति जयादित्यमतम् । ) "इवार्थे वकारोऽयम्" इति भागवृत्तिः[१] । [ आल इण्डिया ओरियण्टल कान्फ्रेन्स अधिवेशन १२, बनारस, भाग २, पृष्ठ २७८, टि० उद्धृतः ] ।

## २–अदसो मात् । ( १।१।१२ ) (?)

( २ ) "अन्तरङ्गपरिभाषाया निरपवादत्वादसिद्धपरिभाषायान्तु नाजानन्तर्य इति सापवादत्वादुभयोरावश्यकत्वात्" इति भागवृत्तिकाराः । [ महाभा० नवा० ( बम्बई सं० ) पृ० २२६ अनु० २[२] ]

( ३ ) "अन्तरङ्गपरिभाषाया निरपवादत्वादसिद्धपरिभाषायास्तु नाजानन्तर्य इति सापवादत्वादुभयोरावश्कता । विप्रतिषेधसूत्रस्थं भाष्यं त्वभ्युच्चयपरमेव" इति भागवृत्तिकाराः । [ शब्दकौ० नवा० पृ० २६० ] ।

( इमावुद्धृतावंशौ 'अचः परस्मिन् पूर्वविधौ' [ १ । १ । ५७ ] इति सूत्रस्थौ स्यातामित्यपि संभाव्यते ।

( ४ ) अत एव भागवृत्तौ भाषाभागे नास्त्येतत् ।[३]

[ संक्षिप्तसारटीका–सन्धि० १६० )

## ३–ओत् । ( १।१।१५ )

( ५ ) गौर्वाहीको गौर्वाहीकमिति वृद्ध्यात्वे न स्याताम् । उच्यते— "पदसंस्कारपक्षे वाहीकाद्यर्थानपेक्षया वृद्ध्यात्वे भविष्यतः" इति भाष्यभागवृत्ती । [ दुर्घटवृत्तिः–पृ० ३ ]

---

१ द्रष्टव्या भाषावृत्तिः—इवार्थे वकारोऽयमित्यन्ये [ १।१।११ ] ।

२ महाभाष्यसम्पादकेन पण्डितशिवदत्तेनोपर्युक्तः पाठोऽत्रैव सूत्रे [ १।१।१२ ] शब्दकौस्तुभनाम्नोद्धृतः । प्रकृतसूत्रस्य कौस्तुभे नायं समग्रो ग्रन्थ उपलभ्यते । 'मूत्वमीत्व' इत्यारभ्य 'अभ्युच्चयमात्रं तत्' इत्यंशः प्रकृतसूत्रस्थकौस्तुभे [ पृष्ठ १६४ ] दृश्यते, शिष्टम् 'अचः परस्मिन् पूर्वविधौ' [ १।१।५७ ] सूत्रस्थकौस्तुभग्रन्थेन सह संवदति।[ शब्दकौ० पृ० २६० ] ।

३ अत्र 'अणोऽप्रगृह्यस्यानुनासिकः' [ ८।४।५७ ] इति सूत्रस्थं भागवृत्त्युद्धरणमपि द्रष्टव्यम् ।

## ४—सर्वादीनि सर्वनामानि । ( १।१।१५ )

( ६ ) 'बाधकान्येव निपातनानि' इति सर्वादि [ १।१।२७ ] सूत्रे [ भाष्ये ] व्याख्यातम् । अत एव तत्रैव सूत्रे [ १ । १ । २७ ] भागवृत्तिः—"पुरातनमुनेर्मुनिताम्' [ किरात० ६ । १६ ] इति, 'पुरातनीर्नदीः' [ माघ० १२ । ६० ] इति च प्रामादपाठावेतौ, गतानुगतिकतया कवयः प्रयुञ्जते, न तेषां लक्षणं चक्षुः" इति । [ परिभाषावृत्तिः–पृ० १३६-३७ ]

( ७ ) "पुरातनमुनेः' [ किरात० ६।१६ ] इत्यादयः कालदुष्टा एवापशब्दाः" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ८२ ]

## ५—न बहुव्रीहौ । ( १।१।२९ )

( ८ ) "कोऽल्पादौ' इत्यधिकारीयः क एव भवति, मत्कपितृक इति भवति । अग्[1] इत्येक इति । अप्रधानार्थत्वे सर्वनामकार्यप्रतिषेधो भवति, अग्[1] अत्र न प्रतिषिध्यतेऽतः सोऽग्[1] भवत्येव इत्येके वदन्ति । गोनर्दीय एवमाह[2] इति भागवृत्तिकृता उक्तम् । [ संक्षिप्तसारटीका–सुबन्त० ३०० ]

## ६—इग्यणः सम्प्रसारणम् ( १।१।४५ )

( ९ ) भागवृत्तिकारस्त्वाह—"नित्यशब्दानामन्वाख्यानमात्रमिदमिति ततो नेतरेतराश्रयदोषः । यदुक्तं भाष्ये—'सर्वाणीतरेतराश्रयाणि [ एकत्वेन ] परिहृतानि, सिद्धं तु नित्यशब्दत्वादिति' [ महाभा० १।१।४५ ] इति ।" [ परिभाषावृत्तिः–पृ० १० ]

## ७—अचः परस्मिन् पूर्वविधौ । ( १।१।५७ )

( १० ) मथितं पण्यमस्येति माथितिकः । 'यस्येति च' [ ६।४।१४८ ] इति लोपस्य स्थानिवद्भावात् तान्तादिति [ ७।३।५१ ] कादेशो न भवति । एवमपि नार्थो विधिग्रहणेन पूर्वस्येति संबन्धसामान्य एषा षष्ठ्यस्तु । पूर्वस्मादपि हि विधिः पूर्वस्य निमित्तस्य संबन्धी भवति । तत्र पूर्वस्य कार्यं प्रतीत्येव सिद्धे तदेतद् द्वितीययत्नार्थं विधिग्रहणं विधिमात्रेऽपि स्थानिवद्भावो यथा स्यात् । तेन वाय्वोरध्वर्य्वोरिति वलि लोपः स्वाश्रयमपि कार्यं न भवतीति भागवृत्तिः । [ ज्ञापकसमु० पृ० ५९-६० ]

---

१ पाणिनीयमतानुसारम् 'अकच्' इत्यर्थः ।

२ गोनर्दीयस्त्वाह—अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ । [ महाभा० १ । १ । ६ ]

( 'अदसो मात्' [ १।१।१२ ] सूत्रे 'विप्रतिषेधे परं कार्यम्' [ १।४।२ ] सूत्रे च उद्धृताः पाठा अपि एतत्सूत्रस्थाः स्युरिति संभाव्यते )।

## ८–द्विर्वचनेऽचि। ( १।१।५९ )

( ११ ) भाष्यभागवृत्त्योस्त्वेतदर्थं नञित्यनुवृत्तौ–"द्विर्वचननिमित्तेऽचि द्विर्वचन एव कर्तव्येऽप्यजादेशो न भवति। कृते द्विर्वचने यथास्वमयङादेशो[1] भवति" इति सूत्रार्थः। [ दुर्घटवृत्तिः—पृ० ४ ]

## ९–तपरस्तत्कालस्य। ( १।१।७० )

( १२ ) (गम्लृशब्दस्य ) अन्ये तु ङसिङसो गमुरिति[2], ङौ गमलि, सुटि–गमा गमलौ गमलः गमलम् गमलौ इति वदन्ति, तदसत्। यतः "तपरः स्वरूपस्यैव ग्राहको भवति न त्वन्यवर्णस्य" इति भागवृत्तिकृता तपरस्तत्कालस्येत्यत्रायमर्थो व्यवस्थापितः[3]। [ संक्षिप्तसारटीका–सन्धि० ७२ ]

## १०–येन विधिस्तदन्तस्य। ( १।१।७२ )

( १३ ) तथा च येनविधिसूत्रे [ १। १। ७२ ] भागवृत्तिकृतोक्तम्—"इको यणचि [ ६। १। ७७ ] इतीकाऽचावयवेनावयविनः समुदायस्य संनिधापितत्वादिगन्तस्याजादौ यणादेश इति वर्णविधिरेव न स्यात् तिष्ठतु दध्यशान त्वं शाकेन" इति। [ परिभाषावृत्तिः–पृ० २६ ]

## ११–गाङ्कुटादिभ्योऽञ्णिन्ङित्। ( १।२।१ )

( १४ ) कथम् 'उद्वेजिता वृष्टिभिराश्रयन्ते' इति कुमारसंभवः [ १। ४ ]। उच्यते—"ण्यन्तान्तात्" इति भागवृत्तिः। [ दुर्घटवृत्तिः–पृ० ७ ]

---

१ 'यथास्वमादेशो भवति', 'यथास्वमियङादयो भवन्ति' इति वा युक्तः पाठः स्यात्।

२ 'गमुल्' इति शुद्धः पाठः स्यात्।

३ अयमभिप्रायः–'ऋत उत्' [ ६।१।१११ ], 'ऋतो ङिसर्वनामस्थानयोः' [ ७।१।११० ] इत्यादिषु ऋकारस्य तपरकरणात् सत्यपि ऋकारऌकारयोः सावर्ण्ये ऌकारस्य ग्रहणं न संभवति, तपरस्तत्कालस्येत्यत्र स्वरूपग्रहणानुवृत्तेरिति भागवृत्त्यभिप्रायः। ये तु तपरस्तत्कालस्येत्यत्र स्वरूपग्रहणं नानुवर्तयन्ति ते सवर्णमात्रस्य ग्रहणमिच्छन्ति। तन्मते ऋकारग्रहणेन ऌकारस्यापि ग्रहणाल्लत्वं भवति। वयं तु भागवृत्तिकारमतमेव युक्तमिति पश्यामः।
सिद्धान्तकौमुदीकृता तु सर्वत्र लत्वमुक्तम् [ द्र० ऌकारान्तप्रकरणम् ]। बालमनोरमाकारस्तु–'एवंजातीयकानां प्रयोगो न भाष्यसंमत इत्याहुः' इत्युक्तवान्।

## १२–गोस्त्रियोरुपसर्जनस्य । ( १।२।४८ )

( १५ ) "गोकुलमित्यत्र स्वंग्रहणानुवृत्त्या[1] व्यपदेशिवद्भावाच्चोपसर्जनह्रस्वत्वं प्राप्नोति, तत्र तदन्तग्रहणसामर्थ्याद् व्यपदेशिवद्भावो न भवति" इति भागवृत्तिकृता 'गोस्त्रियोरुपसर्जनस्य' [ १ । २ । ४८ ] इत्यत्र समाहितम् । [ परिभाषावृत्तिः—पृ० १०६ ]

## १३–लुपि युक्तवद् व्यक्तिवचने । ( १।२।५१ )

( १६ ) भागवृत्तिकार विमलमति बलियाछेन ( = आह )—

विशेषस्य विशेषेण मिलितं युक्तमुच्यते ।
समासाख्यं तदेव स्यात् तद्धितोत्पत्तिरेव च ॥

[ व्याकरण दर्शनेर इतिहास, पृष्ठ १७६ पादटिप्पणी ]

## १४–सरूपाणामेकशेष एकविभक्तौ । ( १।२।६४ )

( १७ ) अनुगङ्गं वाराणसी·········तद्वदत्यन्तायतेत्यर्थ इति केचित् । तथा च "अनुगङ्गमेतत् सूत्रम्" इत्येकशेषसूत्रे [ १।१।६४ ] भागवृत्तिकारः प्रयुङ्क्ते । नेति वयम् । [ पदमञ्जरी—भा० १, पृ० ३५८ ]

## १५–ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । ( १।२।७३ )

## अनेकशफेष्विति वक्तव्यम् । ( १।२।७३ वा० )

( १८ ) ग्राम्यपशुसङ्घेऽनेकशफेऽतरुणे स्त्रीलिङ्गं शिष्यते । 'स्त्रीपुंसयोः' [ संक्षिप्तसार० समास० ४०८ ] इत्यादिना पुंस एकशेषे प्राप्तेऽप्राप्ते च विधानम् । एतद् भागवृत्तिकारप्रभृतीनां मतम् ।

[ संक्षिप्तसारटीका—समास० ४१४ ]

## १६–प्रतिषेधे हसादीनामुपसंख्यानम् । ( १।३।१५ वा० )

( १९ ) अत्रादिशब्दः प्रकारे सादृश्ये च।····· यदुक्तं भागवृत्तिकृता—"प्रकारस्तु शब्दक्रियत्वात्" इति । [ दुर्घटवृत्तिः—पृ० १४ ]

---

१ 'येनविधिस्तदन्तस्य' [ १ । १ । ७२ ] इत्यत्र 'स्वं रूपम्' [ १ । १ । ६८ ] इत्यतः स्वंपदस्यानुवृत्तिं मत्वा दोषमुद्भावयतीति भावः । स्वंग्रहणानुवृत्तिश्च न सर्वेषां संमता इति सीरदेवः । [ परिभाषावृत्तिः-पृ० १०६ ]

## १७–हरतेर्गतिताच्छील्ये[1] । ( १।३।२१ वा० )

( २० ) "गतताच्छील्ये" इति तु भागवृत्तिः[2] । [ दुर्घटवृत्तिः–पृ० १६ ]

## १८–शप उपलम्भने । ( १ । ३ । २१ वा० )

( २१ ) भागवृत्तौ तु—"उपलम्भनं प्रकाशनमित्युक्तम्" इति ।

[ दुर्घटवृत्तिः—पृ० १५ ]

( २२ ) भागवृत्तिकारस्तु "उपलम्भनं प्रकाशनम्, देवदत्ताय शपते किञ्चित् प्रकाशयतीत्यर्थः[3] । [4]वाचा शरीरस्य स्पर्शनमित्यदः कस्यचित् काव्यम्[5] ।" [ धातुवृत्तिः—पृ० २०४ ( शपधातौ ) ]

( २३ ) भागवृत्तिकारः पुनराह–"शपेरुपलम्भने प्रकाशने कथने वर्तमानादात्मनेपदं भवति । देवदत्ताय शपते । देवदत्तं यत्किञ्चित् कथयतीत्यर्थः । [2]वाचा शरीरस्पर्शनमुपलम्भनमित्यदः कस्यचित् काव्यम्[5]" इति ।

[ पुरुषकार०—पृ० ६४ ]

## १९–आङो यमहनः । ( १ । ३ । २८ )

( २४ ) कथम्–'आजघ्ने विषमविलोचनस्य वक्षः' [ किरात० १७।६३ ] इति ?·······भागवृत्तौ तु "नैवायं साधुरिति, [6]'आयोधे' इति पाठान्तरमुक्तम् ।" [ धातुवृत्तिः—पृ० २१७ ( हनधातौ ) ] ।

---

१ अयं पाठः काशिकासंमतः । भाष्ये तु भागवृत्तिवत् "गतताच्छील्ये" इत्येव ।

२ "हरतेर्गतताच्छील्ये, गतविधप्रकारास्तुल्यार्था इति भर्तृहरिः" इति भाषावृत्तिः [ पृ० ३२ ] । अत्र भाषावृत्तिसम्पादकेन भर्तृहरिरित्यस्यार्थः–"भागवृत्तिग्रन्थस्य रचयिता" इति टिप्पण्यामुक्तम्, तदयुक्तम् । यतो ह्यत्रैव वार्त्तिके दुर्घटवृत्तौ [ पृ० १६ ] भर्तृहरिभागवृत्त्योर्विभिन्नौ पाठावुद्धृतौ । तथा हि—'गतताच्छील्ये इति भागवृत्तिः । गतविधप्रकारास्तुल्यार्था इति भर्तृहरिः" इति । अयं भर्तृहरिर्महाभाष्यव्याख्यातैव ।

३ नागेशस्यापीदमेवमतम्, अत आह—'सख्यः शपामि नहि किञ्चिदपि स्मरामि' इत्यादौ शपथार्थकत्वान्नात्मनेपदम् । महाभाष्यप्रदीपोद्योत १ । ३ । ३१ ॥

४ "वाचा शरीरस्पर्शनमुपलम्भनम्" इति काशिका [ १।३।२१ ] ।

५ काव्यशब्देन जयादित्यमतमुपहसति भागवृत्तिकारः ।

६ 'आपेदे' इति पाठान्तरं मैसूरमुद्रितधातुवृत्तौ । [ भा० ३, पृ० ६ ] । २६ तमेऽस्मिमे उद्धरणे 'आपीडे' इति भागवृत्तिकारस्य पाठो निर्दिष्टः ।

( २५ ) 'गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः' [ किरात० १७ । ६३ ] इत्यसाधुरिति भागवृत्तिः ।

[ संक्षिप्तसारटीका—तिङन्त० १२४ ]

( २६ ) "आपीडे विषमविलोचनस्य वक्षः" इति पाठो भागवृत्तिकृता व्यवस्थितः । [ संक्षिप्तसारटीका—तिङन्त० १२४ ]

( २७ ) कथं तर्हि-'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः [ १७।६३ ], 'आहध्वं मा रघूत्तमम्' इति भट्टिश्च [?] । "प्रमाद एवायम्" इति भागवृत्तिः । [ सिद्धान्तकौ० पृ० ३६६ ]

( २८ ) कथम् 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः [ १७। ६३ ], अकर्मकानुवृत्तेः ? उच्यते—'वक्षसा' इत्यध्याहार्यः । अयमर्थः—विषमलोचनस्य वक्षसा स्वं वक्ष आजघ्ने । बाणनद्याः प्रतिमुखं यथा स्यात् तथा भुजाभ्यामुपेत्य । अथवा विषमलोचनस्य भुजाभ्यां स्वं वक्ष आजघ्ने । अथवा विषमलोचनस्येति सामीप्ये षष्ठी । स्वं वक्ष आजघ्ने आस्फोटितवान् । यद्वा प्रतिमुखमिति विभक्त्यर्थेऽव्ययीभावः । विषमलोचस्य वक्ष एत्य आजघ्ने, प्रकृतत्वाद् वक्ष एव । एवं च 'आङो यमहनः' [ १ । ३ । २८ ] इति तङ् । पूर्वव्याख्यायाम् 'स्वाङ्गकर्मकाच्च' [ वा० १ । ३ । २८ ] इत्यनेनात्मनेपदम्[1] इति भागवृत्तिः । [ दुर्घटवृत्तिः—पृ० १६ ]

## २०—अधेः प्रसहने । ( १।३।३३ ) (?)

( २९ ) भागवृत्तिस्तु ञित्त्वादात्मनेपदम् । अधिपूर्वः करोतिः क्षमायां

---

१ अत्रेदमवधेयम्—धातुवृत्तौ सिद्धान्तकौमुद्यां च 'आजघ्ने' इत्यस्य भागवृत्तिमुखेन स्पष्टमपशब्दत्वमुक्तम् । संक्षिप्तसारटीकायामपि 'आपीडे' इति पाठो भागवृत्तिमुखेन व्यवस्थापितः । अतस्तत्राऽपि 'आजघ्ने' इत्यस्य भागवृत्तिकृन्मतेऽसाधुत्वं स्पष्टमेव । दुर्घटवृत्तौ नु तस्यैव 'आजघ्ने' इति पदस्य भागवृत्तिमुखेन साधुत्वं प्रतिपादितमिति महद्विपरीतत्वं लक्ष्यते । कदाचिदत्र दुर्घवृत्तिपाठो भ्रष्टः स्यात् । धातुवृत्तौ-'आयोधे', 'आपेदे' इति पाठद्वयस्य दर्शनात् संक्षिप्तसारटीकायां च 'आपीडे' पाठस्योपलम्भाद् भागवृत्तेरपि पाठो भ्रष्ट इति प्रतीयते ।

मल्लिनाथेन प्रकृतपदव्याख्यायाम्—"अत्रात्मनेपदं विचार्यम्, 'आङो यमहनः' इत्यत्राकर्मकाधिकारात् 'स्वाङ्गकर्मकाच्च' इति वक्तव्यत्वात् ।………पूर्वैरेव दूषितत्वात् ……… ।" इत्याद्युक्तम् । अत्र 'पूर्वैः'-पदेन क उच्यन्ते ? किं भागवृत्तिकारस्यापि तत्र संग्रहः संभवति ?

वर्तते । यदाहैव-"वहुं न शक्यः किमुताधिकर्तुम्" इति ।

[ [1]तत्त्वचन्द्रिका १।४३ ]

## २१-कर्तृस्थे चाशरीरे कर्मणि । (१।३।३७) (?)

(३०) इह प्राप्त्युपसर्जनवचने नयतिर्द्विकर्मकः, शिवमुपायं पौरुषं नयन्तीत्यात्मनेपदं न भवतीति भागवृत्तिः । [ [2]तत्त्वचन्द्रिका २।३५ ]

## २२-आङ उद्गमने । (१।३।४०)

(३१) कथं 'नभः समाक्रामति नष्टवर्त्मना स्थितैकचक्रेण रथेन भास्करः' [ ? ] इति । उच्यते-"अपशब्द एवायम्" इति भागवृत्तिः ।

[ दुर्घटवृत्तिः-पृ० १७ ]

(३२) "नभः समाक्रामति कृष्णवर्त्मना स्थितैकचक्रेण रथेन भास्करः' इत्यसाधुरिति" भागवृत्तिः । [ संक्षिप्तसारवृत्तिः-तिङन्त० ४१ ]

## २३-अकर्मकाच्च । (१।३।४५)

(३३) कथं 'संभविष्याव एकस्यामभिजानासि मातरि' इति भट्टिः [ ६।१३८ ], 'अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः' [ महाभा० १ । १ । ४४ ] इति [ च ] जानातेरकर्मकत्वादनेन तङ्प्रसङ्गात् । उच्यते-"व्यवस्थितविभाषाविज्ञानाज्ज्ञानोपसर्जनवृत्त्या जानातेरज्ञानार्थत्वात्, तस्य भाष्यकारवचनाद्वा अभिजानासीति" इत्युक्तवान् भागवृत्ति[ कार ]ः ।

[ दुर्घटवृत्तिः-पृ० १८ ]

## २४-उपाद्यमः स्वकरणे । (१।३।५६)

(३४) कथम् 'उपायंस्त महास्त्राणि' [ १५।२१ ], तथा 'उपायंसत नाऽऽसवम्' [ ८ । ३३ ], 'शस्त्राण्युपायंसत जित्वराणि' । [ १ । १६ ],

---

साहित्यदर्पणकारोऽप्याह-"'आङो यमहनः', 'स्वाङ्गकर्मकाच्च' इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम् । इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वाच्च्युतसंस्कारत्वम्" इति । [ सप्तमपरिच्छेदे-पृ० ३९६ ]

१ किरातस्य "भवादृशाश्चेदधिकुर्वते रतिम्" [ १ । ४३ ] इति श्लोकस्य गदसिंहकृतायां टीकायामुद्धृतं वचनम् । उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठ उद्धृतम् । अत्र मल्लिनाथीया घण्टापथव्याख्याऽपि द्रष्टव्या ।

२ किरातस्य द्वितीयसर्गस्य पञ्चत्रिंशत्तमस्य श्लोकस्य गदसिंहकृतायां टीकायामेतद्वचनमुपलभ्यते । उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे समुद्धृतम् । अत्र मल्लिनाथीया-"नयतिः प्रापणार्थे द्विकर्मकः । अत्र पौरुषस्य कर्तृस्थकर्मत्वेऽप्युपायस्यातथात्वात् क्रोधं विनयत इत्यादिवत् 'कर्तृस्थे चाशरीरे कर्मणि' [ १ । ३ । ३७ ] इत्यात्मनेपदं न भवति" इति व्याख्या द्रष्टव्या ।

'नोपायध्वं भयं सीताम् [ ७।१०१ ] इति भट्टिः; स्वकरणं पाणिग्रहणमिति व्याख्यानात्। उच्यते—"कर्तरि[1] इत्यनुवृत्तेः स्वकरणमात्यन्तिकस्वीकारः" इति रक्षितो भागवृत्तिः[2] [ च ]। [ दुर्घटवृत्तिः–पृ १८ ]

( ३५ ) "विवाहे वाच्य इति जयादित्यव्याख्यानेऽसन्तोषात् 'हस्ते-कृत्य[3] महास्त्राणि' इति प्रमाणोपदर्शनाय भट्टिप्रयोगो दर्शितः। भागवृत्ति-कृतोऽपि एतदेव मतम्।" [ संक्षिप्तसारटीका–कृदन्त० ४७७ ]

## २५–पूर्ववत् सनः। ( १।३।६२ )

( ३६ ) अत्र च सन्नन्तस्याप्यवयवद्वारानुदात्तेत्त्वादात्मनेपदम्। तद्-द्वारा हि समुदाय एव गवादाविव लिङ्गमासज्यते। गुपादीनां त्रिमुनिसंमतेन नित्यसन्नन्तत्वेन केवलेषु गोपत इत्यादेस्तत्फलस्य भावाज्जुगुप्सादेश्च समुदा-यस्यानुपदेशात्। न च नित्यसन्नन्तत्वे वृत्त्युक्तं गोपायतीत्यादि न सिद्ध्येत्, यथासंभवं प्रकृत्यन्तरात् स्वार्थणिजादिना तत्सिद्धेः। व्यक्तं चैतत् 'पूर्ववत् सनः' इत्यत्र भागवृत्तौ। [ दैवस्य पुरुषकारव्याख्यायाम्–पृ० ८१ ]

## २६–णेरणौ यत्कर्म णौ चेत् स कर्तानाध्याने। ( १।३।६७ )

( ३७ ) इह तर्हि आरोहन्ति हस्तिनं हस्तिपगाः, तानारोहयति हस्तीति। किं पुनरत्र नेष्यते? वृत्तिकृता नेष्यते, भागवृतिकारेण त्विष्यते[4]।

[ पदमञ्जरी–भा० १ पृ० २५१ ]

( ३८ ) एवं च 'आरुह्यते[5] ( ?, आरोहयते ) हस्ती स्वयमेव' इति ये

---

१ उत्तरार्थं तर्हि कर्तृग्रहणं कर्तव्यम्' [ १। ३। १४ ] इति भाष्यवचनात् 'कर्तरि' इति पदमनुवर्तते। कर्तृस्थे इति तु दुर्घटवृत्तिसम्पादकस्य संशोधनम्।

२ 'रक्षितभागवृत्ती' इति सम्पादकस्य संशोधनम्।

३ अत्र उपपूर्वाद् यमेरात्मनेपदप्रकरणात् 'उपायंस्त' इति पाठः शुद्धः स्यात्। भट्टिकाव्येऽपि [ १५।२१ ] तथैव पाठो दृश्यते।

४ तान् आरोहयते हस्तीति भागवृत्तिकारस्य मते कर्मवद्भावेनात्मनेपदं भवती-त्यर्थः। कर्मवद्भावस्त्वन्यकर्मण्युत्पन्नेऽपि भवत्येव। 'आरोहयते' इत्यत्र 'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रि····' इत्यादिना यकः प्रतिषेधात् केवलमात्मनेपदमेव भवति।

५ 'आरुह्यते' इत्यपपाठः, णिजन्तात्कर्मवद्भावे यको निषेधात्।

कर्मवद्भावं प्रदर्शन्ति[1] ते न्यायं भाष्यं च बाधमाना अवधीरणीयाः[2] ।
[ भाष्यप्रदीपे १।३।६७ ]

( ३९ ) प्रदर्शयन्त इति भागवृत्तिकाराः । [ भा० प्र० उद्योते १।३।६७ ]

२७–[ व्याङ्परिभ्यो रमः । ( १।३।८३ ) ]

२८–उपाच्च । ( १।३।८४ )

२९–विभाषाऽकर्मकात् । ( १।३।८५ )

( ४० ) पूर्वसूत्रादेव रम इत्यस्यानुवृत्तौ[3] प्राप्तायां यदत्र रमतेरुपादानं तज्जयादित्यचन्द्रव्यवस्थितस्यार्थान्तरस्यापि सूचनमिहैव यथा स्यादित्येवमर्थम् । तन्मतानुसारेणायमर्थो भवति—उपादुत्तराद् रमतेः कर्तर्यात्मनेपदं न भवति, तस्मादेवाकर्मकाद्वा भवति । देवदत्तमुपरमीति सकर्मकान्नित्यं निषेधः । यावद् भुक्तमुपरमति उपरमत इत्यकर्मकात् पाक्षिकम् । अकर्मकस्यैवास्य धातोरन्तर्भावितण्यर्थत्वात् सकर्मकत्वम्, देवदत्तमुपरमयती-

---

१ भाष्यविवरणे 'प्रदर्शयन्ते' इति प्रतीकमुपादत्ते नागेशः ।

२ यत्तु कैयटेन भागवृत्तिकारमतस्य प्रत्याख्यानमुक्तं तच्चिन्त्यम् । भागवृत्तिकारो हि रुहिं कर्मस्थक्रियकं मन्यते । णेरणाविति सूत्रं तु कर्तृस्थक्रियार्थं कर्तृस्थभावार्थं चेति भाष्यकारः प्रतिजानीते । अत एव भागवृत्तिकारः 'आरोहयते हस्ती स्वयमेव' इत्यत्र कर्मवद्भावेनात्मनेपदमाह । यत्तु कैयटेनात्र 'रुहिर्गतिविशेषवचनः' इत्युपरितनं [ ८।१।५९ ] भाष्यवचनमुपन्यस्य रुहिः कर्तृक्रियक इत्युक्तं तदपि नैकान्तम् । यतो ह्यत्र सूत्रे भाष्यकारो रुहिं कर्मक्रियमेव मन्यते । अत एव च स 'आरोहयते' इत्यत्र विचारं प्रक्रम्य कर्मवद्भावेन तस्य सिद्धिं मन्यमानः 'दर्शयते' इत्युदाहरणान्तरमुदाजहार । भर्तृहरिरपि 'न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते' इत्यनेन 'आरोहन्ति हस्तिनं हस्तिपगाः' इत्यत्र न्यग्भवनं कर्म कर्मणि हस्तिन्येवेति स्पष्टं प्रतिपादयति । तदेवं भाष्यकारभर्तृहरिभागवृत्तिकाराणां समानमतमित्युक्तं भवति । यत्तु 'रुहिर्गतिविशेषवचनः' इति स्थानान्तरीयं भाष्यकारवचनं तन्न्यग्भावनकर्मपरमिति न कश्चित् तत्र विरोधः । अयं भावः– 'आरोहन्तिहस्तिनं हस्तिपगाः' इत्यत्र द्वे कर्मणी—न्यग्भावनं न्यग्भवनं च । तत्र न्यग्भावनं कर्तृस्थम्, न्यग्भवनं तु कर्मस्थम् । यदा तु न्यग्भवनं कर्म अभिप्रेतं तदा ण्यन्तात्कर्मवद्भावे कर्मस्थक्रियत्वादात्मनेपदं भवत्येवेति भाष्यकारभागवृत्तिकारयोर्मतमित्युक्तं भवति ।

३ 'पर्याङ्विपरिभ्यो रमः, उपाद्र रमः, अकर्मकाद्वा' [ संक्षिप्तसार०–तिङन्त० १४१, १४२, १४३ ] इति सूत्रपाठे 'उपाद्र रमः' इति सूत्रे पूर्वसूत्राद् रमधातुरनुवर्तत एवेत्यर्थः ।

त्यर्थः । एतत् सन्दिग्धं, स्मृतेरदर्शनादिति भागवृत्तिकृताऽभिधाय प्रथम एव पक्षोऽङ्गीकृतः । [ संक्षिप्तसारवृत्तिटीका–तिङन्त० १४२-१४३ ]

## ३०–निगरणचलनार्थेभ्यश्च । ( १।३।८७ )

( ४१ ) कथं 'शिरः कम्पयते युवा' अनेन परस्मैपदित्वात् । उच्यते— "चिन्त्यम्" इति भागवृत्तिः । ( दुर्घटवृत्तिः–पृ० २१ )

## ३१–विप्रतिषेधे परं कार्यम् । ( १।४।२ ) (?)

( ४२ ) "यत्तु विप्रतिषेधसूत्रे [ १।४।२ ] पूर्वपरिभाषा[1] गतार्थेति भाष्यम् । तदभ्युच्चयमात्रम्" इति भागवृत्तिकैयटलघुविवरणकारादयः ।
[ व्या० सिद्धान्तसुधानिधिः–पृ० ४३२ ]

( ४३ ) "विप्रतिषेधसूत्रस्थं भाष्यं त्वभ्युच्चयपरमेव" इति भागवृत्तिकाराः । [ शब्दकौस्तुभः–१।१।५६, पृ० २९० ]

( ४४ ) इयं च [2]परिभाषा बहिरङ्गपरिभाषयैव सर्वकार्यस्य सिद्धत्वाद् भागवृत्तिकृता नाभ्युपगम्यते । ( परिभाषावृत्तिः–पृ० ४६ )

[ इम उद्धृतांशाः 'अचः परस्मिन् पूर्वविधौ' [ १।१।५७ ] इतिं सूत्रस्थाः स्युरित्यपि सभाव्यते । ]

## ३२–यू स्त्र्याख्यौ नदी । ( १।४।३ )

( ४५ ) "इदूतोरेवेयं संज्ञा" इति भागवृत्तिः । ( भाषावृत्तिः–पृ० ४३ )

## ३३–यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । ( १।४।३१ )

( ४६ ) यदुक्तं यस्मात्प्रत्ययविधिसूत्रे [ १।४।१३ ] भागवृत्तिकृता— "समासान्तो विधिरनित्य इति नैषा परिभाषा, भाष्ये [3]ज्ञापकाभावात्" इति । [ परिभाषावृत्तिः–पृ० ११८ ]

---

१ अर्थतोऽनुवादः । पूर्वा परिभाषा=अन्तरङ्गं च बलीयो भवतीत्येषा । तथा च भाष्यम्–'उभे तर्हिं कर्तव्ये ? नेत्याह, । अनयैव सिद्धम्' इति [ १।४।२, पृ० ३०५ ] ।

२ 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत्' इत्येवेति भावः । अत्राह सीरदेवः– "तन्मते 'वृक्ष इह' इत्यादावचोरानन्तर्ये यद्यपि बहिरङ्गपरिभाषा नास्ति तथापि पदसंस्कारपक्षे दोषाप्रतिक्षेपो व्याख्येयः" इति । [ परिभाषावृत्तिः–पृ० ४६ ]

३ भागवृत्तिकारस्यैतद् वचनं भाष्यानालोचनपरम् । यतो हि द्वित्रिभ्यां [ ६।२। १९७ ] सूत्रभाष्ये–'एवं तर्हि ज्ञापयत्याचार्यो विभाषा समासान्तो भवतीति' इति स्पष्टं ज्ञापकमुच्यते ।

( ४७ ) अतो यदुक्तं यस्मात् प्रत्ययविधिसूत्रे भागवृत्तिकृता—"समासान्तो विधिरनित्य इति नैषा परिभाषा, भाष्ये ज्ञापकाभावाद्" इति, तदसमीक्षिताभिधानम् । [ पुरुषोत्तमीयपरिभाषावृत्तिः–पृ० ४२ ]

### ३४–ध्रुवमपायेऽपादानम् । ( १।४।२४ ) (?)

( ४८ ) कथं 'शब्दे सोऽपि वियुज्यते' इति लक्षणम् (?) । "अहो चित्रा प्रयोगस्थितिः" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० २४ ]

### ३५–ऊर्यादिच्विडाचश्च । ( १।४।६१ )

( ४९ ) "वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः' इति माघे [ १०।१६ ] व्यवहितप्रयोगः [1]प्रमादजः" इति भागवृत्तिः[2] ।

[ उज्ज्वलदत्तस्य–उ० वृ०–पृ० ९६ ]

### ३६–विभाषा कृञि । ( १।४।९८ )

( ५० ) अधिकृत्वा इति कर्मप्रवचनीयत्वे समासाभावे भागवृत्तावुद्धृतम् । [ [3]तन्त्रप्रदीपः १।४।९८ ]

### ३७–समर्थः पदविधिः । ( २।१।१ ) (?)

( ५१ ) कथम् 'असूर्यं पश्या राजदाराः' 'अश्राद्धभोजी' इत्यादौ नञ्समासः ? क्रियया नञ् सम्बन्धादसामर्थ्यात् । उच्यते–"सुटः स्त्रीपुंसयोरिति वक्तव्ये सुडनपुंसकस्येति [ वचनं ] ज्ञापकम्" इति भागवृत्तिः ।

[ दुर्घटवृत्तिः–पृ० २८ ]

### ३८–तृतीया तत्कृतार्थेन गुणवचनेन । ( २।१।३० )

( ५२ ) "अक्ष्णा काणः, [4]अक्षिकाणः" इति तु भागवृत्तिः ।

[ संक्षिप्तसारवृत्तिः–समास० १५ ]

---

सीरदेवस्त्वित्थं प्रतिविधत्ते—"………तदयुक्तम् । ननु लाघवार्थं समासान्तनिर्देशो न कृतोऽन्यथा 'मूर्द्धसु' इति गौरवं स्यात् । यद्येवं 'मूर्धपादृदत्सु' इति कुर्यात् । एवं च समासान्तक्रमो न लङ्घितो भवतीति ज्ञापितम्" इति ।

[ परिभाषावृत्तिः–पृ० ११८ ]

१ 'उपसर्गप्रतिरूपकत्वात् समाधानीय इत्युपाध्यायसर्वस्वम्' इत्युज्ज्वलदत्तः ।

[ उ० वृ०-पृ० ९६ ]

२ आविस्शब्द ऊर्यादिगणे पठ्यत इति हेतोरयं भागवृत्तिपाठ एतत्सूत्रस्थ एवेति संभाव्यते ।

३ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठे निर्दिष्टम् ।

४ काशिकादिवृत्तिषु तु 'तत्कृतेनेति किम् ? अक्ष्णा काणः' इति समासाभाव एव प्रदर्शितः ।

( ५३ ) अत्र टीकाकारः–"भागवृत्तिरित्युक्तं जयादित्यस्यास्वरससूचनार्थम्।" [ संक्षिप्तसारटीका–समास० १५ ]

( ५४ ) तृतीयार्थकृत इति किम् ? "अदणा काणः, अक्षिकाणः" इति भागवृत्तिः। [ हरिनामामृतम्–सू० १७४७ ]

( ५५ ) भागवृत्तिमते अक्षिकाणः शब्दः सुसाधुः।

[ व्याकरणदर्शनेर इतिहास–पृ० २१८ ]

## ३९–अर्धं नपुंसकम्। ( २।२।२ )

( ५६ ) "अर्धं नपुंसकमेव समप्रविभागे वर्तते नान्यलिङ्गम्" इति भागवृत्त्यादि। [ टीकासर्वस्वम्–भा० १, पृ० ६० ]

## ४०–प्राप्तापन्ने च द्वितीयया। ( २।२।४ )

( ५७ ) कथं प्राप्ता जीविकां प्राप्तजीविका ? असामानाधिकरण्येऽपुंवद्भावात्। उच्यते—"·······प्राप्तापन्ने चेत्यविभक्तिकाकारप्रश्लेषादकारश्च पूर्वपदस्यानुविधीयते" इति भागवृत्तिः। [ दुर्घटवृत्तिः–पृ० ३४ ]

## ४१–नञ्। ( २।२।६ ) (?)

( ५८ ) कथम्·······'अनेकेषां[1] नानास्थान' इति न्यासः [?] उत्तरपदार्थप्रधानत्वान्नञ्समासस्य।·······अत एव भागवृत्तिकृता–"अनेकेषामिति जैनेन्द्रो[2]क्तं कालदुष्टा [3]एवापशब्दा[4]:" इति। [ दुर्घटवृत्तिः–पृ० ३४ ]

---

१ 'प्रयोजकं चित्तमनेकेषाम्' [ ४।५ ] योगदर्शनमत्रानुसन्धेयम्।

२ जयमङ्गलोक्तमिति पाठान्तरम् तच्चायुक्तम्, पूर्वत्र तस्यानुपादानात्। कोऽयं न्यासः, कश्च जिनेन्द्र इति न ज्ञायते। जिनेन्द्रबुद्धिविरचिते काशिकाविवरणात्मके न्यासे नैतद्वचनमस्माभिरुपलब्धम्। पूज्यपादापरनाम्ना देवनन्दिनाऽपि पाणिनीयव्याकरणे शब्दावतारनामा न्यासो व्यरचीति श्रूयते [ संस्कृत व्याकरणशास्त्र का इतिहास भाग १, पृ० ४१२-४१३, द्वि० सं० ]। देवनन्दिविरचितं व्याकरणं च जैनेन्द्रनाम्ना प्रसिद्धम्। अतः संभाव्यते जैनेन्द्रपदेन तस्यैव निर्देशः स्यात्, न्यासशब्देन च शब्दावतारन्यासस्य। जैनेन्द्रन्यासो माधवीयधातुवृत्त्यादिष्वनेकेषु ग्रन्थेषूद्धृतो वर्तते।

३ नागेशस्तु 'अनेकेषामिति बहुवचनम् साध्वेवेति मञ्जूषायां विस्तरेण प्रतिपादितम्' इत्याह प्रदीपोद्योते २।२।६॥

४ भाष्यकृता त्वेकवचनं समर्थितम्, न बहुवचनं निवारितम्। अत्रैकशेषेण बहुवचनं भविष्यति। विशेषविचारो वाक्यपदीयतृतीयकाण्डे ५९२ तमे पृष्ठे [ काशी संस्क० ] द्रष्टव्यः।

रक्षितस्त्वाह—अध्यारोपितबहुत्वाद् बहुवचनम्। यथा–'द्युद्भ्यो लुङि' [ १।३।९१ ] 'वृद्भ्यः स्यसनोः' [ १।३।९२ ] इति। [ दुर्घटवृत्तिः–पृ० ३४ ]

(५९) [अनेकेषाम्....] प्रमादेति भागवृत्तिकृताप्येतदुक्तम्। मैत्रेयपादास्तु[1] द्वित्वादावप्येकत्वाध्यारोपादेकवचनम्। यदा त्वेकत्वाध्यारोपविषये द्वित्वादौ भेद आश्रीयते तदा वचनभेदः। यथा द्युद्रुयः, वृद्धयः। यथा (च) मातुलान्य इमा इति। एवं चानेकेषामित्यादयोऽपि प्रयोगा जिनेन्द्रादिषु दृश्यमाना साधवः। [[2]नन्वादव्याख्या–पृ० ६३-६४]

## ४२- कर्मणि द्वितीया। (२।३।२)

### समयानिकषाहायोगेषूपसंख्यानम्। (२।३।२ वा०)

(६०) कथं 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः [६।११], 'हा तात हा अम्ब' [अं० ६, पृ० १५७] इति मालतीवाक्यम्? हायोगेष्वपि दृश्यते इति द्वितीयासंभवात्। उच्यते–....भागवृत्तिकृत्त्वाह–"शोच्यशोचकसम्बन्धे षष्ठ्यपवादो द्वितीया। संबोधने तूपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा" [दुर्घटवृत्तिः–पृ० ४०]

## ४३–गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। (२।३।१२) (?)

(६१) "कृति षष्ठी वा" इति भागवृत्तिः। ग्रामस्य गन्ता, ग्रामाय गन्ता। वनस्य गमनं वनाय। [संक्षिप्तसारटीकाः–कारक० १०१]

(६२) षष्ठ्यां निर्दिष्टायामुत्सर्गसिद्धा कर्मणि द्वितीयैव भवतीत्यर्थः। सामान्येनैव[3] कृति षष्ठी न भवतीति जयादित्यमतम्।.... "कृति षष्ठी वा" इति भागवृत्तिः। [संक्षिप्तसारटीका–कारक १०१]

(६३) अत्र कृति षष्ठी च न स्यादित्येके—व्रजं गन्ता व्रजाय गन्ता। षष्ठी चेति चन्द्रगोमी। षष्ठी[4] एवेति भागवृत्तिः। [हरिनामामृतम्–सू० ९८३]

['प्रसीडेंसी कालेज कलकत्ता'-प्राध्यापकेन एस. पी. भट्टाचार्येण 'दि भागवृत्ति एण्ड इटस आथर'-नाम्नि स्वकीये लेखे (ओरियण्टल कान्फ्रेंस बनारस)

---

१ तन्त्रप्रदीपकारस्तत्र भवान् मैत्रेयरक्षित इत्यर्थः।

२ पुण्डरीकविद्यासागरकृतस्य कातन्त्रप्रदीपस्यैकदेशः। अप्रकाशितमेतत् पुस्तकम्। ढाकाविश्वविद्यालय–पुस्तकालयस्हस्तलेखस्य पृष्ठसंख्याऽत्र निर्दिष्टा। उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां षष्ठे पृष्ठ उद्धृतम्।

३ कर्तृकर्मणोः कृति [२।३।६५] इति सूत्रेणेतिभावः।

४ संक्षिप्तसारे 'कृति षष्ठी वेति भागवृत्तिः' [कारक० १०१] इति सूत्रस्य दर्शनात् तन्मते विकल्प एवेष्यत इति स्पष्टम्। तथैव च व्याख्यातृभिर्व्याख्यातम्। हरिनामामृते तु 'षष्ठी एव' इत्येवकारो निर्दिश्यते, तेन कस्य प्रतिषेध इति न स्पष्टं ज्ञायते। पाणिनीयसूत्रानुसारं [२।३।१२] द्वितीयाचतुर्थ्यौ त्ववश्यं भवत इति स्पष्टम्, नहि तयोः 'एव'शब्देन प्रतिषेधः कर्तुं शक्यः।

[1]प्रकृतसूत्रस्थमिताक्षरावृत्तेः 'भगवन्मते तु सूत्रस्य प्रत्याख्यानाद् ग्रामस्य गन्तेत्येव भवितव्यम्' इति पाठस्य 'भागवृत्तिकृन्मते ......गन्तेत्येव भवितव्यम्' इति संशोधनमुपन्यस्तम्, तच्चिन्त्यम्; मिताक्षरायां भगवच्छब्देन भाष्यकारः पतञ्जलिरभिप्रेतः। तेनैव चैतत्सूत्रं प्रत्याख्यातम्, न भागवृत्तिकृता अतएव। नागेशोऽपि तत्सूत्रप्रदीपोद्योते 'ग्रामस्य गन्ता' इत्यादौ षष्ठ्येवेति भावः' इत्युक्तवान् [ २।३।१२ ]। प्रदीपकारोऽप्याह—'ग्रामं गन्ता इति यत्कैश्चिदुक्तं तद्भाष्यकारस्यानभिमतम्' इति।

[ महाभाष्यप्रदीपे २।३।७०। ]

## ४४–व्यवहृपणोः समर्थयोः। ( २।३।५७ )

( ६४ ) शतस्य व्यवहरति शतं वा, शतस्य दीव्यति शतं वा, शतस्य पणायते शतं वा। पणेः स्तुत्यर्थत्वादेव आय इत्यनार्षमिति भागवृत्तिकृताऽप्युक्तम्। [ कातन्त्रपरिशिष्ट, कारकप्रकरण, सूत्र ५४ ]

## ४५–प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा। ( २।३।४६ )

( ६५ ) कथं वृक्षोऽयमिति? क्रियाया अभावे कारकत्वाभावादनभिहितत्वाच्च। उच्यते—"कारकत्वमभिहितत्वं[2] च" इति भागवृत्तिः।

[ दुर्घटवृत्तिः–पृ० ४६ ]

## ४६–क्तस्य च वर्तमाने। ( २।३।६७ )

( ६६ ) वर्तमानक्तेन भूतक्तस्य बाधनात् त्वया ज्ञातो मयाऽर्चित इत्यादयोऽपशब्दा इति भागवृत्ति। [ द्र० ३।२।१८८ सूत्रोद्धरणानि ]

## ४७–द्विगुरेकवचनम्। ( २।४।१ ) (?)

( ६७ ) यत्तु 'द्विगु'—[ २।४।१ ] [3]सूत्रे भागवृत्तिकारेणोक्तम्—"समाहरणं समाहार इति भावे घञ् इति स्थिते यदुक्तं कर्मसाधने पञ्चकुमार्यः समाहृताः पञ्चकुमारि इति 'गोस्त्रियोरुपसर्जनस्य' [ १।२।४८ ] इति न प्राप्नोति। एवं तर्हि भावसाधनः"[4] इति। [ परिभाषावृत्तिः–पृ० ७६ ]

---

१ अर्थात् २।३।१२ सूत्रे।

२ "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" [ २।३।४६ ] इति भाष्यवचनात् क्रियात्वे गम्यमाने कारकत्वमभिहितत्वं चोभयमुपजायत इति भावः।

३ परिभाषावृत्तिसम्पादकेन [ २।१।५१ ] संख्या निर्दिष्टा, सा त्वशुद्धा प्रतिभाति।

४ सीरदेवो भागवृत्तिकारमतं प्रत्याचक्षाण आह–"तदयुक्तम्, यतः–'गोस्त्रियोरुपसर्जनस्य' [ १।२।४८ ] इत्यस्याभावे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' [ १।२।४७ ] इति विद्यत एव। नपुंसकत्वं तु 'स नपुंसकम्' [ २।४।१७ ] इत्यनेन। अत एव 'स्वमोर्नपुंसकात्' [ ७।१।२३ ] इति लुका न विभक्तिश्रुतिः।

[ परिभाषावृत्तिः—पृ० ७६ ]

## ४८–जातिरप्राणिनाम् । ( २।४।६ ) (?)

( ६८ ) विविधा अनेकरूपास्तरवः शैलाश्च तरुशैलाः । नियतद्रव्यविवक्षया नैकवद्भावः, यथा बदरामलकानि । तरुप्रधानाः शैलास्तरुशैलाः, शाकपार्थिवादित्वात् समासो वा बोद्धव्यः । एतदुभयमपि भागवृत्तिकृन्न क्षमते । यदाह—"कविना च तिमिरातिशयः प्रतिपाद्यते, रञ्जने च तिमिरस्योत्कर्षः, अन्यथैव तत्रान्धकारसद्भावात् । ततश्च—'रञ्जितं नु विविधं तरुशैलम्' इत्येव पाठः" । [ [1]तत्त्वचन्द्रिका ६।१५ ]

## ४९–तद्राजस्य बहुषु तेनैवास्त्रियाम् । ( २।४।६२ )

( ६९ ) कथम्......'कौरव्याः पशवः'.......इति वेणी [ १ । २५ ] ? यतः-'कुर्वादिभ्यो ण्यः' [ ४।१।१५१ ] इत्यक्षत्रियवृत्तिकुरुशब्दात् सावकाश इति क्षत्रियवृत्तेः 'कुरुनादिभ्यो ण्यः' [ ४।१।१७२ ] इति भाव्यम् । तस्य च तद्राजत्वाल्लुक् ।.......उच्यते—"कुर्वादिभ्यो ण्यः' [ ४।१।१५१ ] इत्यत्रापि क्षत्रियगोत्रग्रहणानुवृत्तेः[2] सोऽपि क्षत्रियगोत्रवचनादेव, तस्यातद्राजत्वादलुक्" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ५२ ]

( ७० ) 'परस्परं परिरेभिरे कुकुरकौरवस्त्रियः' इति माघः [ १३। १६ ], तथा-'सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः' [ वेणी ३। ४७ ] ? 'कच्छादि'-[ ४।२।१३३ ] पाठात् 'मनुष्यतत्स्थयोर्वुञ्' [ ४।२। १३४ ] इति वुञा भाव्यम् । उच्यते—शब्दव्युत्पत्तेर्विवक्षाधीनत्वाद् मनुष्याणां कुरुशब्देनाविवक्षितत्वान्न वुञ् । ततश्च तस्येदमित्यर्थेऽण्, जनपदविवक्षायां वाञ् । "विषयो देशे' [ ४।२।५२ ] इत्यणि तात्पर्यात् इति[3] भागवृत्तिः । [ दुर्घवृत्तिः–पृ० ५३ ]

## ५०–यङोऽचि च । ( २।४।७४ )

( ७१ ) "चकारात् 'बहुलं छन्दसि' [ २।४।७३ ] इति सर्वमनुवर्तते।

---

१ करातार्जुनीयस्य—"रञ्जिता नु विविधास्तरुशैलाः" [ ६।१५ ] इति श्लोकस्य गदसिंहकृतायां तत्त्वचन्द्रिकाटीकायामुद्धृतम् । टीकेयमद्य यावदमुद्रितैव .देवीयपरिभाषावृत्तिभूमिकायां निर्दिष्टम् ।
[ द्रष्टव्यम्–पृ० ६-७ ]

२ क्षत्रियगोत्रग्रहणं कुतोऽनुवर्तत इति तु न व्यक्तीकृतं भागवृत्तिकृता । न हि कुतश्चित्तस्यानुवृत्तिः सम्भवति ।

३ प्रकृतसूत्रेऽयं पाठोऽन्यसूत्रे वेति न निश्चितं शक्यते वक्तुम् । दुर्घटवृत्तौ स्वत्रैव सूत्र उद्धृतः ।

तेन बाहुल्यादनच्यपि छन्दस्येव यङ्लुक् । भाष्ये तु हुश्नुग्रहणज्ञापक- [ ६।४।७८ ] बलाद् बोभवीतीत्येव पदं भाषायां साधु, नान्यत्" इति भागवृत्तिः[१] । [ भाषावृत्तिः–१०६ ]

( ७२ ) भाषायामपि केचित् चर्करीतमिच्छन्ति । उक्तं हि भाष्ये- भाषायामपि यङो लुगस्ति; निर्लूरवृत्तौ चोक्तम्-भाषायामपि यङो लुगस्तीति । लुगधिकारे 'यङो बहुलम्' इति चान्द्रे पठ्यते । काशिकायामपि छन्दोऽ- नुवृत्तिरिह नेष्टा इत्युक्तम् । 'जाघटीति' जाम्बवती काव्ये, जाज्वलीति इति नीतिसंग्रहे, 'शंशमयां चक्रुः' इति भट्टिकाव्ये च पठ्यते । भागवृत्तिकार- स्तु 'बोभवीति' इत्येव न छान्दसमिति मन्यते ।

[ कातन्त्रपरिशिष्ट-वृत्ति चर्करीताभ्यासस्य, सूत्र १३ ]

---

१ अत्र भागवृत्तिमतमेव युक्तम् । ये त्वत्र 'छन्दसि' पदं नानुवर्तयन्ति, तेषां मते बहवो दोषाः । यथा—

( क ) अननुवर्तने छन्दसि पदे भाषायां स्वतः सिद्धे 'यङ् लुग् भाषायामपि भवति' इति ज्ञापकं [ महाभा० ६।४।८७ ] व्यर्थं स्यात् । द्र० प्रदीप ६।४।१९, पृष्ठ ८६२ ॥

( ख ) भाषायां सति यङ् लुकि 'रोरवीति' इत्यत्र 'दृष्टानुविधिश्छन्दसि' इति भाष्यकारीय वचनमसमञ्जसं स्यात् । [ द्र०–महाभा० १।१।५ ] ।

( ग ) यङ् लुग् भाषायामपि भवति । किमेतस्य ज्ञापने प्रयोजनम् ? बेभिदीति चेच्छिदीतीत्येतत् सिद्धं भवति भाषायामपि" [ ६।४।८७ ] इति भाष्यवचन उभयत्र 'अपि'पदस्य सामञ्जस्यं न प्रकल्पते ।

( घ ) 'च्छ्वोः शूड्०' [ ६।४।१९ ] इत्यत्र क्ङिद्ग्रहणानुवृत्त्यननुवृत्ती प्रकृत्य-'तत्र त्वेतावान् विशेषः' इति भाष्यकारव्याख्यानुसारं वकारान्तानां भाषायां यङ् लुग् न भवतीति ज्ञाप्यते, अन्यथा दिवादीनां यङ् लुगन्तानां तिबादिषु क्ङिद्ग्रहणानुवृत्तौ ऊठ् न स्यात्, अननुवृत्तौ च स्यादित्येषोऽपि भेदः स्यात् । न चायं विशेषो भाष्यकारेण प्रतिपादितः । अत एव कैयट आह–छान्दसो यङ्लुक् । नचैते छन्दसि प्रयोगा दृश्यन्ते । भाषायां तु 'हुश्नुवोः सार्वधातुके' [ ६।४।८७ ] इत्यत्र हुश्नुग्रहणज्ञापकात् क्वचिदेव यङ्लुग् भवति न सर्वत्र । अन्यथा–'यङोऽचि च' [ २।४।७४ ] इत्यत्र छन्दोग्रहणानुवृत्तिरनर्थिकैव स्यादिति भाष्यकारस्य दर्शनम् । [ कैयटे ६।४। १९ ]

( ङ ) नागेशभट्टोऽपि–छान्दस एव यङ् लुक्, भाषायां तु क्वाचित्क एव" इत्यत्रानुकूलः । द्र० भाष्यप्रदीपोद्योतः–१।१।५; ६।४।८७ ॥ एतेन चान्द्रादीना भाषायां 'यङो वा [ ६।२।३५ ] इति सूत्रेण समान्येन यङ् लुग्विधानं चिन्त्यमेव ।

( ७३ ) यङो लुग् बहुलम्, प्रकृतिवत् परस्मैपदी चेति । भागवृत्तिकारस्तु बोभवीतीत्येव न छान्दसमिति मन्यते।

[ कविकण्ठहार-विरचिते चर्करीतरहस्ये। द्र०–लायब्रेरी आफ दी इण्डिया आफिस, कैटोलाग जिल्द १, भाग २, ग्रन्थ नं० ७८३ ]

## ५१–बाष्पोष्मभ्यामुद्वमने । ( ३।१।१६ )

( ७४ ) "धूमाच्चेति भर्तृहरिः" इति भाषावृत्तिः । अत्राह [1]सम्पादकः–"भर्तृहरिः भागवृत्तिकारः" इति ।

## ५२–आयादय आर्धधातुके वा । ( ३।१।३१ )

( ७५ ) पणेः स्तुत्यर्थादेव आय इत्यनार्षम् इति भागवृत्तिः ।[2]

[ कातन्त्रपरिशिष्ट कारकप्रकरण सूत्र ५४ ]

## ५३–सर्तिशास्त्यर्तिभ्यश्च । ( ३।१।५६ )

( ७६ ) अत एव 'पुषादिद्युतादि-लृकारानुबन्धार्तिशास्तिभ्यश्च परस्मै' इत्येकीकृतं कौमारैः [ कातन्त्र० ३।४।२८ ], भागवृत्तौ च यथाश्रुतं यथाभाष्यं च सूत्रं व्याख्यातम् । [ [3]शब्दसाम्राज्यम् ]

## ५४–चरेष्टः । ( ३।२।१६ )

( ७७ ) कथं 'प्रेक्ष्य स्थितां सहचरीम् इति रघुः' [?] अधिकरण इत्यनुवृत्तेः । उच्यते—"चिन्त्यताम्" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ५६ ]

## ५५–लिटः कानज् वा । ( ३।२।१०६ )

## ५६–क्वसुश्च ( ३।२।१०७ )

( ७८ ) क्वसुकानचौ छन्दस्येव विहिताविति भाष्यव्याख्यातृभिर्व्यवस्थितम् । अत एव भाषाभागे भागवृत्तिकृद् भाषावृत्तिकारश्च क्वसुकानज्विधानलक्षणं न लिखितवान्[4] [ संक्षिप्तसारटीका–तिङन्त० ८२६ ]

( ७९ ) कानच्क्वसू छान्दसाविति भागवृत्तिः ।

[ ज्ञापकसमुच्चयः–पृ० ७३ ]

---

१ भाषावृत्तिसम्पादकस्यैतद्वचनं चिन्त्यम् । [ द्रष्टव्यम्–संस्कृत व्याकरणशास्त्र का इतिहास भाग १, पृ० ३५२, टि० २, द्वि० सं० ]

२ द्रष्टव्यम्—भागवृत्तिसंकलनम् २।३।५७ सूत्रस्थम् ।

३ द्रष्टव्यम्–मद्रास राजकीय हस्तलेख पुस्तकालय भाग ३, खण्ड १ बी०, पृष्ठ ३३९३, पुस्तकसंख्या २४४५ ।

४ 'न लक्षितवान्' इति पाठान्तरम् ।

## ५७–यजजपदशां यङः ( ३।२।१६६ )

( ८० ) वदेर्यङ्लुगन्तादूकः–'वावदूकश्च वक्तरि'[1] इति भागवृत्तिः।

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० १५३ ]

## ५८- मतिबुद्धिपूजार्थेभ्यश्च। ( ३।२।१८८ )

( ८१ ) "इह वर्तमानक्तेन भूतक्तस्य बाधनमिष्यते। तेन 'त्वया ज्ञातो मयार्चितः' इत्याद्यचिकित्स्यम्" इति भागवृत्तिः। [ भाषावृत्तिः–पृ० १६१ ]

( ८२ ) कथं 'त्वया ज्ञातो वधाद् भीतः' [ ? ] इत्यादि·········। उच्यते—अपशब्द इति पदे [?] भागवृत्तिः। [ दुर्घटवृत्तिः–पृ० ६३ ]

( ८३ ) वर्तमानक्तेन भूतक्तस्य बाधनमिष्यते। तेन 'त्वया ज्ञातो मया ज्ञातः' इत्याद्यचिकित्स्यम् इति भागवृत्तिरिति भाषावृत्तिः।

[ दुर्घटवृत्तिः–पृ० ६३ ]

( ८४ ) कथं भूते क्ते सति 'त्वया शीलितो मया ज्ञातः' इति बुद्ध्यर्थत्वाद्वर्तमानक्तेन भूतक्तस्य बाधनात्। अत एव 'क्तस्य च वर्तमाने' [ २।३।६७ ] इति षष्ठी न भवति। यदि वर्तमानस्य ग्रहणं स्यात् तर्हि 'क्तस्य च वर्तमाने' इति षष्ठी स्यात्। "कालदुष्टा एवापशब्दाः" [ इति ] भागवृत्तिः। [ दुर्घटवृत्तिः–पृ० ६३ ]

( ८५ ) 'त्वया ज्ञातो मया ज्ञातः' इत्यसाधुरिति भागवृत्तिः।

[ संक्षिप्तसारवृत्तिः–कारक० १७७ ]

( ८६ ) आह चैतत् सर्वं सुधाकरः—"अनेन वर्तमाने क्तेन भूते

१ तुलना कार्या—वावदूकोऽतिवक्तरि' [ ३।१।३५ ] इत्यमरः। अत्र क्षीरस्वामी–"यजजपेत्यत्र वदेरनुपदेशः कार्यं इति पदकारवाक्यादूकः" इत्याह। पदकारशब्देन नात्र भाष्यकारोऽभिप्रेतः, भाष्ये तादृशपाठस्यानुपलम्भात्। यद्वा भाष्येऽयं पाठस्त्रुटितः स्यात् [द्र०–सं० व्या० शास्त्र का इतिहास पृ० ३३२-३३४]। टीकासर्वस्वकारस्तु–"वदेर्यङन्तात् 'यजजपदशां यङः' [ ३।२।१६६ ] इति बहुवचननिर्देशादन्यतोऽपि 'ऊकः' इति धातुपारायणम्। चेक्रीयन्तानां 'यजिजपिदंशिवदाम्' इत्यूक इति कालापाः" इत्याह। भानुजिदीक्षितस्तु–"कुर्वादिषु [ गण० ४।१।१५१ ] वावदूकशब्दपाठात् वदेरूकः" इत्याह [ अमरटीका ३।१।३५ ]

प्राप्तः क्तो बाध्यत इति [1]भर्तृहरिः । [2]भाष्यटीकाकृतस्तु भूतेऽपि भवतीत्यूचुः । [ दैवस्य पुरुषकारव्याख्यायाम्–पृ० ६७ ]

### ५९–परिमाणाख्यायां सर्वेभ्यः । ( ३।३।२० )

( ८७ ) कथम्—'एकोऽपि तव निश्चयः' इति ? [3]"पदसंस्कारेण" इति भागवृत्तिः । [ धातुवृत्तिः–पृ० ३१४ ( चिञ्धातौ ) ]

### ६०–प्रथने वावशब्दे । ( ३।३।३३ )

( ८८ ) अशब्दविषये प्रथने वाच्ये वेः परात् स्तृणातेर्घञोऽभावात् "वस्तुविस्तरे" इत्यसाधुरयं प्रयोग इति चेत्, तत्तु नातिश्लिष्टम् । यतः सूत्रे प्रथनं विस्तीर्णत्वमभिप्रेतम् । तदाह काशिकाकारः—"प्रथनं विस्तीर्णता" इति । न चात्र विस्तरशब्देन वस्तूनां विस्तीर्णत्वमभिप्रेतम्, अपि तु बाहुल्यम् । यथा तृणस्य विस्तर इत्यत्र । अत एव "प्रथनमिति किम् ? तृणविस्तारः" इति प्रत्युदाहृतम् । अस्य चार्थं भागवृत्तिकारोऽपि अञ्जसाऽन्य ( ? सा व्या ) ख्यौत्–"तृणस्य विस्तरो बाहुल्यमित्यर्थः" । तत्कथं प्रथने वर्तमानादस्माद्धातोर्घञ् भवितुमर्हतीति ।



[ पण्डितदुर्वेकमिश्रकृतहेतुबिन्दुटीकालोकः–पृ० २९२ ]

### ६१–उदि श्रयतियौतिपूद्रुवः । ( ३।३।४९ )

( ८९ ) 'उच्छ्रायः⋯⋯[4]उच्छ्रयः' [ अमर० २।४।१० ] । भागवृत्तिकारस्तु 'उच्छ्रयम्' नेच्छति । [ संक्षिप्तसारटीका–कृदन्त० २८१ ]

### ६२–एरच् । ( ३।३।५६ )

( ९० ) "वाऽसरूपेण' [ ३।१।९४ ] क्तादयोऽपि भवन्ति । भीतं शिशुना, वृष्टं देवेन, वर्षणं मेघस्य" इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० १७१ ]

---

१ कोऽयं भर्तृहरिरिति न ज्ञायते । पूर्वोद्धरणानां तुलनया कदाचिदयं भागवृत्तिकृतो निर्देशः स्यात् ।

२ क इमे भाष्यटीकाकृत इति न ज्ञायते । कदाजिदत्र पूजायां बहुवचनं स्यात् । तथा सति किमयं वाक्यपदीयकारो महाभाष्यव्याख्याताऽशेषशब्दविद् भर्तृहरिः संभवति ? प्रदीपकारस्त्वयं नैव संभवति, तस्य तक्रकौण्डिन्यन्यायेन वर्तमानवतेन भूते क्तस्य बाधाश्रयणात् ।

३ 'पदसंस्कारपक्षे भविष्यति' इति भाषावृत्तिः [ ३।३।२० ] ।

४ कथं 'पतनान्ताः समुच्छ्रयाः' [ महा० शान्ति० २७।३१ ] इति । वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायेन सम्बद्ध्यत इति काशिकाकारः ।

## ६३–अ प्रत्ययात् । ( ३।३।१०२ ) (?)

( ६१ ) "कण्डूतिरसाधुः" इति भागवृत्तिः ।

[ टीकासर्वस्वम्–भा० २ पृ० ३११ ]

## ६४–अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा । ( ३।४।१८ )

( ६२ ) "भावेऽपि हि प्रत्यये सकर्मकाद् धातोः पश्चात् कर्मसंबन्धो भवत्येव । पाक ओदनस्य, कटं कृत्वा शेते, गम्यते मया ग्रामम्" इति भागवृत्तावुक्तम् । [ भाषावृत्तिः–पृ० १८६ ]

( 'लः कर्मणि च' [ ३।४।६९ ] सूत्रमपि द्रष्टव्यम् । )

( ६३ ) भावेऽपि प्रत्यये सकर्मकस्य धातोः कर्मापेक्षा चेत् कर्मसम्बन्धो भवत्येव । यथा–गम्यते मया ग्राममिति भाषावृत्तिर्भागवृत्तिश्च ।

[ हरिनामामृतम्–सूत्र ६६६ ]

## ६५–कषादिषु यथाविध्यनुप्रयोगः । ( ३।४।४६ )

( ६४ ) "स[1] च क्रियासमभिहारानुपयोगवद् व्यवधानेऽपि भवति । यथा—घृतनिधायमुदकं निदधाति" इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० १९३ ]

## ६६–सप्तम्यां चोपपीडरुधकर्षः । ( ३।४।४९ )

( ६५ ) "अत्र णमुलविधावुपसर्गग्रहणं पीडेरेव [2]विशेषणम्" इति

---

१ अनुप्रयोग इत्यर्थः ।

२ 'धनुररिभिरसह्यं मुष्टिपीडं दधाने' [ भट्टि० १।२६ ] इति प्रयुञ्जन् भट्टिकारस्त्वतन्त्रं मन्यते । धातुवृत्तिकारो [ पृ० २०० ] भट्टिभागवृत्त्योर्मतमेवं निराचष्टे—"इदं तावत् साहसमात्रम्, यदाचार्येण प्रयुक्तस्यातन्त्रत्वाङ्गीकरणम् । यदपि पीडिनैव सम्बन्धकथनं तदपि न न्याय्यम्, बह्वच्कस्यास्य पूर्वनिपातायोगात् । अत एव वृत्तिन्यासपदमञ्जर्यादिषु सर्वसम्बन्धोऽङ्गीकृतः" इति । यत्तु भागवृत्तिमतनिराकरणे–"इदं तावत् साहसमात्रं प्रयुक्तस्यान्त्रत्वाङ्गीकरणमित्युक्तम्" तन्न, दृश्यते ह्यन्यत्रापि प्रयुक्तस्यातन्त्रत्वम् । यथा–'तस्यादित उदात्तमर्धह्रस्वम्' इ यत्र ह्रस्वग्रहणम् [ द्र०–काशिका १।२।३२ ] । अपि च 'बह्वच्कस्य पूर्वनिपातायोगात्' इति यो हेतुरुक्तः सोऽप्ययुक्तः, भवति ह्यन्यत्रापि बह्वच्कस्य पूर्वनिपाते उपसर्गस्यैकेनैव धातुना सम्बन्धः । यथा–'नाम्न्यादिशिग्रहोः' [ ३।४।५८ ] इति । अत्र ह्याङो दिशिनैव सम्बन्धः, न तु ग्रहिणा । स्वयमपि ग्रहधातौ तथैव प्रयुङ्क्ते–'नामग्राहमाह्वयति' इति । तस्मादत्रापि केवल पीडयतिनैव सम्बन्धः सम्भवति । यदि तु नेष्यते, तर्हि हेत्वन्तरं वाच्यम् । भाषावृत्तिकारोऽपि भागवृत्तिमतमनुसरति [ द्र०–पृ० १९३ ] ।

शब्दरत्नकारस्तु पूर्वोक्तं भट्टिप्रयोगं घञन्तं मन्यते । तदाह–'धनुररिभिरसह्यं

भागवृत्तिः । [ धातुवृत्तिः–पृ० २०० ( कृषधातौ ) ]

( ६६ ) [1]केचिद् उपशब्दस्य पीडयतिनैव सम्बन्धमाहुः ।

[ धातुवृत्तिः–पृ० ३४८ ( रुधधातौ ) ]

( ६७ ) उपपूर्वाणामेवैषां ग्रहणमिच्छन्ति जयादित्यदुर्गसिंह[2]धर्मदासाः[3] । तदिह नेष्टम् । एतदर्थमेव 'हस्तरोधं दधानुः' [?] इति भट्टिप्रयोगो दर्शितः । भागवृत्तिकृताऽप्येतदेवेष्टम् । [ संक्षिप्तसारटीका–कृदन्त० ४३७ ]

## ६७–लः कर्मणि च भावे चाकर्मकेभ्यः ( ३।४।६९ ) (?)

( ६८ ) 'गम्यते ग्रामं विप्रेण' इत्याद्यपि भावे भवतीति भागवृत्तिकृतोक्तम् । [ संक्षिप्तसारटीका–कृदन्त० १८० ]

( अलंखल्वोः [ ३।४।१८ ] सूत्रमप्यत्र द्रष्टव्यम् । संक्षिप्तसारटीकाकृता कृदन्तप्रकरणेऽस्य पाठस्योद्धरणात् कदाचिदयं पाठः–'अलंखल्वोः' [ ३।४।१८ ] इति सूत्रवृत्तावेव स्यादिति संभाव्यते । )

## ६८–न षट्स्वस्रादिभ्यः ( ४।१।१० )

( ६९ ) भागवृत्तिकारस्तु नप्तृशब्दमपि स्वस्रादिषु पठित्वा [4]नप्ता

---

मुष्टिपीडं दधाने' इति भट्टिप्रयोगे तु न णमुलन्तम् । किन्तु घञन्तम् । क्रियाविशेषणत्वाच्च द्वितीयेति बोध्यमिति [ श० र० पृ० ८३८ ] ।

१ केचित्पदेन भागवृत्तिकारोऽत्राभिप्रेतः ।

२ कातन्त्रवृत्तिकारः ।

३ धर्मदासो चान्द्रव्याकरणस्य वृत्तिकारः ( धर्मदासनाम्ना प्रसिद्धा वृत्तिश्चन्द्रस्यैवस्वोपज्ञाद्र–द्र० सं० व्या० इति० भाग १ पृष्ठ ५२८ ) । नायं वृत्तिकारस्यैवाभीष्टमपि तु–'सप्तम्यां चोपात् पीडरुधकर्षभ्यः' [ १।३।१४१ ] इति सूत्रे 'उपात्' इति पृथक्पदस्य निर्देशात् सूत्रकारस्य चन्द्रगोमिनोऽप्यभीष्टम् । जैनशाकटायनव्याकरणकारोऽपि–'तत्सप्तम्योपात् पीडरुधकृषः' [ ४।४।१५७ ] इति सूत्रे 'उपात्'-पदं पृथक् पपाठ । तेनोभयोर्मते उपपदस्य सर्वधातुभिः सह सम्बन्धः स्पष्ट एव । भोज [ स० कं० २। ४।२६४ ]–देवनन्दि [ जैनेन्द्र० २।४।३५ ]- हेमचन्द्र [ ५।४।७५ ]-कातन्त्रकार [ कृद्वृत्ति० ४६४ ] प्रभृतय उपपदं धातुभिः सह समस्य [ उपपीडरुधकर्ष० ] निर्दिशन्ति, व्याख्यायां च सर्वधातुभिः सहोपसर्गं सम्बध्नन्ति । एवं च कृत्वा सर्वव्याकरणसम्प्रदायेषु भागवृत्तिकार एव 'उप'-पदं केवलं पीडयतिना सम्बध्नाति । भट्टिकारस्तु पीडयतिनाऽप्यावश्यकं न मन्यते । यदाह—'मुष्टिपीडं दधानेः ( १।२६ ) इति ।

४ 'नप्तेति भागुरिः' इति भाषावृत्तिकारः [ पृ० २०४ ] । उत्तरोद्धरणे ( १०१ ) 'नप्त्री' इति भागुरिः' इति पठ्यते । अमरस्तु–'नप्त्री पौत्री सुतात्मजा' [ २।६।२६ ] इत्याह ।

कुमारी' इत्युदाजहार । [ शब्दकौस्तुभः–भा० ३ पृ० १० ]

( १०० ) भागवृत्तिकृद् नप्तृशब्दं स्वस्रादौ पठितवान् ।

[ दुर्घटवृत्तिः–पृ० ७४ ]

( १०१ ) नप्तेति भागवृत्तिः, नप्त्रीति भागुरिः ।

[ कातन्त्र-परिशिष्ट गोपीनाथटीका पृष्ठ ३८९, गुरुनाथ विद्यानिधि भट्टाचार्य संस्क० ]

## ६९–वर्णादनुदात्तात् तोपधात् तो नः । ( ४।१।३९ )

( १०२ ) वाऽनुवृत्तिर्जयादित्यचन्द्रप्रभृतिभिरुक्ता । वाचस्पत्यादिकोशे च विकल्पो दृश्यते । भाष्येऽनुदाहृतत्वाद भागवृत्तिकृता नित्यत्वमुक्तम् । भागुरिवोपालितादिकोशे नित्यत्वमुदाहृतम् [ संक्षिप्तसारटीका–तद्धित० ४६ ]

## ७०–चन्द्रभागान्नद्याम् । ( ४।१।४५ ग० सू० )

( १०३ ) तस्माच्चन्द्रभागान्नद्यामिति पाणिनीयानां ह्रस्वादिपाठः[1] । तेषामेव भ्रमपरम्पराविरोधादपपाठ इति भागवृत्तिकृतोपेक्षितः ।

[ संक्षिप्तसारटीका–तद्धित० ७४ ]

## ७१–शार्ङ्गरवाद्यञो ङीन् । ( ४।१।७३ )

( १०४ ) भागवृत्तिकारस्तु केकयशब्दं प्रत्ययरहितमेव मूलप्रकृतिं पठति । उपचारात्तदपत्ये स्त्रियां वर्तमानः स्त्रीप्रत्ययं प्रतिपद्यते । तेनेदं सिध्यति—'प्राक् केकयीतो भरतस्तोऽभूत्" इति व्याचष्टे ।

[ [2]तन्त्रप्रदीपः ४।१।७३ ]

( १०५ ) कथं 'प्राक्, केकयीतो भरतस्ततोऽभूत्' [ भट्टि० १।१४ ] इति ? "आद्यप्रकृतेरेव कुलद्वारेण सोऽयमिति स्त्रीवृत्तेः शार्ङ्गरवाद्यञो ङीन्' [ ४।१।७३ ]" इति भागवृत्तिः । [ भाषावृत्तिः–पृ० २२९ ]

## ७२–द्रोणपर्वतजीवन्तादन्यतरस्याम् । ( ४।१।१०३ )

( १०६ ) भागवृत्तिकारस्त्वश्वत्थामन्यप्यनादिद्रोणसन्ततित्वाद् मुख्यं द्रौणायनशब्दं मन्यते [ [2]तन्त्रप्रदीपः ४।१।१०३ ]

## ७३–दध्नष्ठक् । ( ४।२।१८ )

( १०७ ) केचिद् दध्नि संस्क्रियत इत्यर्थविवक्षायां टन्[3] माभूदित्याहुः । न हि किञ्चिद् दध्नि संस्क्रियमाणं प्रसिद्धमस्ति । यस्याभिधानं दाधिकम् ? स्पष्टार्थं वचनमिति भागवृत्तिः । [ संक्षिप्तसारटीका तद्धित० १६२ ]

---

१ संक्षिप्तसारे—'चान्द्रभागान्नद्याम्' इति दीर्घादिपाठः ।

२ वचनमिद पुरुषोत्तदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठे समुद्धृतम् ।

३ पाणिनीयानां ठग इत्यर्थः ।

## ७४–भिक्षादिभ्योऽण् । ( ४।२।३८ )

( १०८ ) भागवृत्तिकारः–"युवतीनां समूहो यौवनम्"[1] इत्याह ।

[ परिभाषावृत्तिः–पृ० ५८ ]

( १०६ ) युवतिशब्दाद् यौवतमिति जयादित्यः । "भस्याढे तद्धिते' [ ६।३।३५ वा० ] इति पुंवद्भावे यौवनम्" इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० २३५ ]

( ११० ) ( युवतीनां समूहः ) "पुंवद्भावे यौवनम्" इति भागवृत्तिः ।

[ हरिनामामृतम्–सू० २३६५ ]

( १११ ) युवतीनां समूहे इत्यर्थे यौवतमिति जयादित्यः । तद्धितानपत्यस्वरे पुंवद्भावात् यौवनमिति भागवृत्तिः । अत एव

यमुपास्ते पुण्यभाजं कलाकुशलयौवनम् ।
सरसं नित्यशस्तन्वि सफलं तस्य यौवनम् ॥

इति तन्मते प्रयोगः । [ शब्दशक्तिप्रकाशिका, पृष्ठ ४५६, ४६० काशी संस्क० ]

## ७५–नडशादाद् ड्वलच् । ( ४।२।८८ )

( ११२ ) "पङ्कवाचिनः शादशब्दाद् ड्वलज् न भवति, अनभिधानात् । शष्पवाचिन एव भवति" इति भागवृत्तिः ।

[ टीकासर्वस्वम्–भा० २ पृ० ११ ]

( ११३ ) शष्पवाचिन एव ( शादशब्दात् ) भवतीति भागवृत्तिः ।

[ संक्षिप्तसारटीका–तद्धित० ३४० ]

( ११४ ) शाद्वलं स्थानम् । देशविशेष इति भागवृत्तिः ।

[ [2]तत्त्वचन्द्रिका ५।३७ ]

## ७६–शेषे । ( ४।२।९२ )

( ११५ ) "इह चक्षुषा गृह्यते चाक्षुषं रूपम् , श्रावणः शब्दः , अश्वैरुह्यते आश्वो रथः , चातुरं शकटम् , दृषदि पिष्टा दार्षदा माषाः , औलूखलाः सक्तवः , चतुर्दश्यां दृश्यते चातुर्दशं रक्षः , इति सामान्येन 'तस्येदम्' [ ४।३।१२० ] इति विवक्षायाम्" इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० २४३ ]

---

१ तथा च दृश्यते—"रूपलावण्यसम्पन्नं कलाकुशलयौवनम् । यस्य पुण्यकृतः प्रेष्यं सफलं जीवितम् ॥" इति सीरदेवोद्धृतः श्लोकः । [ परिभाषावृत्तिः–पृ० ५८ ] अग्रे १११ तम उद्धरणे प्रथमचरणे पाठ भेदेन उद्धृतः ।

२ किरातस्य–"रम्या नवद्युतिरपैति न शाद्वलेभ्यः" [ ५।३७ ] इति पद्यस्य व्याख्यायां गदसिंहकृतायां तत्त्वचन्द्रिकायामुद्धृतम् । उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे समुद्धृतम् ।

### ७७–अग्रपश्चाड्डिमच्[1]। ( ४।३।२३ वा० )

( ११६ ) "अग्रपश्चाड्डिमजिति छान्दसम्" इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० २५४ ]

### ७८–पदोत्तरपदं गृह्णाति । ( ४।४।३९ )

( ११७ ) पदोत्तरपदिकः । एतद् भागवृत्तिकृतो [2]भाषावृत्तिकृतश्चाभीष्टम् । [3]जयादित्येन त्वन्यथा व्याख्यातम् ।

[ संक्षिप्तसारटीका तद्धित० १६५ ]

### ७९–स्तेनाद्यन्नलोपश्च । ( ५।१।१२५ )

( ११८ ) "स्तैन्यशब्दस्तु [4]पाञ्चायत लौहितक इतिवदागमिकः" इति भागवृत्तिः । [ भाषावृत्तिः–पृ० ३०९ ]

### ८०–योपधाद् गुरूपोत्तमाद् वुञ् । ( ५।१।१३२ )

( ११९ ) साहाय्यमित्यपि ब्राह्मणादि-[ ५।१।१२४ ] त्वादिति जयादित्यः । नेति भागवृत्तिः । [ भाषावृत्तिः–पृ० ३१० ]

( १२० ) जयादित्यमतेन साहाय्यमित्यपि, न भवति चेति भागवृत्तिः ।

[ दुर्घटवृत्तिः–पृ० ८६ ]

( १२१ ) साहाय्यमिति जयादित्यः, नेति भागवृत्तिः ।

[ हरिनामामृतम्–सू० २६०६ ]

### ८१–धान्यानां भवने क्षेत्रे खञ् । ( ५।२।१ )

( १२२ ) धान्यशब्देनात्र तद्विशेषवाचिनः शब्दा गृह्यन्ते, न तु धान्यशब्दः ।·······भागवृत्तिकारस्तु 'धान्यीनम्' उदाजहार ।

[ संक्षिप्तसारटीका–तद्धितपरि० ६०३ ]

---

१ 'अग्रादिपश्चाड्डिमच् स्मृतः' इति भाष्यवार्तिकम् ।

२ 'पदोत्तरपदिकः' इत्यत्र भाषावृत्तिकृतो या सम्मतिर्निर्दिष्टा सा चिन्त्या । भाषावृत्तौ तादृशोदाहरणस्यानुपलम्भात्, पौर्वपदिक औत्तरपदिक प्रातिपदिकमित्याद्युदारणानां दर्शनाच्च ।

३ जयादित्येन तु पदशब्द उत्तरपदं यस्य तस्मादित्येवं व्याख्याय पौर्वपदिकः, औत्तरपदिक इत्युदाहरणे उपन्यस्ते ।

४ इमं सृष्टिधर इत्थं व्याचष्टे—"पञ्चायतस्य भावः पाञ्चायतम् । लोहितको मणिः, तस्य भावो लौहितकम् । एतौ शब्द्येते । न चानयोरञोऽणो वा विधाने सूत्रमस्ति । तथा च 'अण्' इति योगविभागाद् यथेदं तथा स्तेनात् स्तैन्यमिति च कल्प्यमिति भावः । आगमः परम्परा, तत आगत आगमिकः । 'चौरिका·स्तैन्यचौर्ये च' [ २।१०।२५ ] इत्यमरोऽपि" इति । [ द्र० भाषावृत्तिः–पृ० ३०६ टि० ]

( १२३ ) भागवृत्तिकारस्तु 'धान्यकम्' ( ?, धान्यीनम् ) उदाजहार।

[ अनिर्ज्ञातकर्तृकाऽमरटीका–द्र० मद्रास ओरियण्टल जर्नल सन् १९३२ पृ० २५३ ]

( भाषावृत्तिकारो धान्यविशेषवाचिन उदाहरन् 'धान्यीनम्' अप्युदाजहार। तेन तन्मते धान्यपदस्य स्वं रूपं तद्विशेषवाचिनश्चेत्युभयमपि गृह्यत इति स्पष्टम्। )

## ८२–अद्यश्वीनाऽवष्टब्धे। ( ५।२।१३ )

( १२४ ) कथमद्यश्वीनो वियोगः ? विजायत इत्यस्याननुवृत्तेरिति जयादित्यः। "स्त्रीलिङ्गनिर्देशादुपमानस्याप्यसंभवान्नैतत्" इति भागवृत्तिः।

[ भाषावृत्तिः–पृ० ३१४ ]

## ८३–सस्येन परिजातः। ( ५।२।६८ )

( १२५ ) ..........................................सस्यकः ॥ १८७९ ॥

भागवृत्तिकृता तूक्तं सस्यसम्पन्नवस्तुषु।
व्रीहिशाल्यादिकेष्वेव स्थावरेष्वत्र भेदवत् ॥ १८८० ॥
यत्त्विदं गुणसम्पन्ने जयादित्येन भाषितम्।
अतिलोकतया तस्य विरसत्वादुपेक्षितम्[1] ॥ १८८१ ॥

[ नानार्थार्णवसंक्षेपः केशवकृतः–भा० २ पृ० २११ ]

## ८४–ऊषसुषिमुष्कमधो रः। ( ५।२।१०७ )
## नगपांसुपाण्डुभ्यश्चेति वक्तव्यम्। ( काशिका )

( १२६ ) पाण्डुगुणयोगात् 'नगपाण्डुपांसुभ्यो रः' इति रः। अस्यानार्षत्वात् पाण्डुरोऽसाधुरिति भागवृत्तिकृतो दुर्ज्ञानं जयादित्यं प्रति वाम्यमात्रजनितम्। भाष्यविरुद्धं हि चेदं न त्वयुक्तम्, वृद्धान्तरोक्तानामन्येषामपि ग्राह्यत्वात्। भाष्यानुक्तानां भट्टिकाव्योक्तानामन्यथाऽप्रामाण्यापत्तेः। अयं च शब्दार्णवकारादिभिरपि परमशिष्टैरनुशिष्टः।

[ रायमुकुटकृताऽमरटीका–द्र० ओरियण्टल कान्फ्रेंस बेनारस जिल्द १, पृ० २७५ ]

---

१ अयं भावः—भागवृत्तिकारमते सस्यकः शालिव्रीह्यादिष्वेव प्रयुज्यते। काशिकारस्तु–सस्यकः शालिः, सस्यकः साधुः, सस्यको मणिरिति सर्वत्र प्रयुक्तवान्।

### ८५–गाण्ड्यजगात् संज्ञायाम् । ( ५।२।११० )

( १२७ ) संहितायास्तुल्यत्वममृष्यन् भागवृत्तिकृत् "कार्मुकं महेषौ" इति[1] पठति । [ [2]तत्त्वचन्द्रिका १३।१६ ]

### ८६–रजःकृष्यासुतिपरिषदो वलच् । ( ५।२।११२ )

( १२८ ) 'या सम्प्रति प्राक् परिषद्वलानाम्' इति व्योषः[3] । [4]"परिष-द्वलान् महाब्रह्मैः" [ ४।१२ ] इति भट्टिः । ( इह तु ) नवाक्षरैकपादे ऽपि वृत्तभेदोऽस्यास्तीति । यथा–'प्रधाने कर्मण्यभिधेये[5] लादीनाहुर्द्विकर्मणाम्" [ १।४।५१ भाष्ये ] इति भागवृत्तिः[6] । [ भाषावृत्तिः–पृ० ३२९ ] ।

---

१ अयं भावः–"गाण्ड्यजगात्" इत्यत्र ह्रस्वदीर्घयोर्गाण्डिगाण्डीशब्दयोस्तुल्या संहिता । तेन गाण्डिवं गाण्डीवं चोभयमपि सिद्ध्यतीति काशिकाकृन्मतम् । भागवृ-त्तिकारस्तु काशिकावृत्तिकृन्मतममृष्यन् किरातार्जुनीयस्य "गाण्डिवं महेषौ" इति वचनं "कार्मुकं महेषौ" इति पठति ।

अत्रेदमप्यवधेयम्–गणरत्नमहोदधौ [ पृ० २३६ ], अमरटीकासर्वस्वे [ भा० १, पृ० २७ ], अमरकोशस्य क्षीरस्वामिनष्टीकायाम् [ पृ० १२ ], कात्यायनश्रौतस्य कर्कभाष्ये [ ६।२।६ ] च 'गाण्ड्यजकात् संज्ञायाम्' इति पाठान्तरमुपलभ्यते । तदनुसारम्–"अजकवं धनुः" इत्यपि प्रयोग उपपद्यते । कात्यायनश्रौतसूत्रे तु– "अजकावं मैत्रावरुणम्" [ ६।२।६ ] इति श्रूयते । तत्कथमिति चेत्; प्रातिपदिक-ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येवं समाधेयम् । श्रौतसूत्रव्याख्यातारस्तु–'अजका'-शब्देन गलस्तनमुच्यत इत्याहुः । अजकशब्देन "अजो विष्णुः, को ब्रह्मा" उच्यते [ द्र० अमरटीकासर्वस्वम्, भा० १ पृ० २७ ] तथा सति न पुंलिङ्गेनाजकशब्देन भिन्नार्थस्य स्त्रीलिङ्गस्याजकाशब्दस्य कथमपि ग्रहणमुपपद्यते । प्रातिपदिकग्रहणपरि-भाषा तु तत्रैव प्रवर्तते यत्रार्थसाम्ये केवलं लिङ्गभेदो भवति । एवं सत्यजकव-अजकाव-शब्दयोः सिद्ध्यर्थम्–"गाण्ड्यजकात् संज्ञायाम्" इत्यत्र "अजक–अजका" इत्युभ-योरपि ग्रहणं द्रष्टव्यम्, पाठस्योभयथा संभवात् । तथा हि—"गाण्ड्यजकात्" इत्यत्र समाहारद्वन्द्वः श्रूयते । स च नपुंसकलिङ्गो भवति । तेनाजकाशब्देन समासेऽपि— "ह्रस्वो नपुंसके प्रातिपदिकस्य" [ १।२।४७ ] इति ह्रस्वत्वे सूत्रपाठ उपपद्यत एव ।

२ किरातस्य गदसिंहकृतायां तत्त्वचन्द्रिकाटीकायामुद्धृतम् । उद्धरणमिदं पुरु-षोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे निर्दिष्टम् ।

३ 'घोषः' इति दुर्घटवृत्तिः–पृ० ८६ ( घोषोऽश्वघोष इत्यर्थः । )

४ 'पर्षद्वलान्' इति साम्प्रतिकः पाठः । ५ 'अभिहिते' इति दुर्घटवृत्तिः–पृ० ८७ । भाषावृत्त्युद्धृत एवपाठो गणरत्नमहोदधावप्युद्धृतः ( पृष्ठ २३८ ) ।

६ भागवृत्तिकृतोद्धृतः पाठो भाष्येऽन्यथोपलभ्यते । तद्यथा 'प्रधानकर्मण्याख्येये'

( १२६ ) "कथम्–'परिषद्वलान् महाब्रह्मैः' इति भट्टिः, नवाक्षरेण च्छन्दोभङ्गात्। नवाक्षरेणैकपादे वृत्तभेदोऽस्ति। यथा–प्रधाने कर्मण्यभिहिते लादीनाहुर्द्विकर्मणाम्' [ १।४।५१ भाष्ये ] इति। तथा– 'तस्मै तिलोदकं दद्यादपुत्राय भीष्मवर्मणे'। एवं च न छन्दोभङ्गः" इति भागवृत्तिः[१]।

[ दुर्घटवृत्तिः–पृ० ८७ ]

---

इति। अस्मिन् पाठेऽष्टाक्षरैकपाद एव। गणरत्नमहोदधिकारोऽप्येवमाह। द्रष्टव्याग्रिमा टिप्पणी।

१ "आसुतिपरिषद्रजश्शब्दानां यौगिकत्वं केचित् प्रतिपन्नाः। तन्मते 'आसुतिमान् परिषद्वान् **रजस्वान् ग्राम**' इत्यपि भवति। परिषच्छब्द एव गृह्यते। यस्त्विदानीन्तनपुस्तकेषु संयोगः परिषच्छब्दो ( ?, संयोगवान् पर्षच्छब्दो ) दृश्यते स प्रमादपाठ एव पुराणेषु हि भाष्यपुस्तकेषु 'परिषदो वलच्' इति पाठः। काव्येषु–श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी' इत्यादिषु परिषच्छब्द एव दृश्यते। कथं तर्हि–'परिषद्वलान् महाब्रह्मैराट नैकटिकाश्रमात्' इत्यनुष्टुप् ? अत्र हि रिशब्दे पृथगवस्थिते नवाक्षरः पादो भवति। न चैतद्युक्तम्–त्रयः पादा अष्टाक्षरा अनुष्टुप्, एको नवाक्षर इति। उच्यते–अयमप्यस्ति वृत्तप्रभेदो यत्रैकः पादो नवाक्षरोऽन्येऽष्टाक्षराः। यथा–"प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीना ण्यन्ते कर्तुश्च कर्मणाम् ॥" [ महाभा० १।४।५१ ] इति। अत्र ह्याद्य एव पादो नवाक्षरः, परिशिष्टा अनुष्टुभ एवेति **कश्चिद् ब्रूते**। तत्त्वतिसूक्ष्मेक्षिकयोच्यते, यतो व्याकरणलक्ष्यं च **द्वाभ्यामपि शब्दाभ्यां** व्याप्तम्। क्षीरस्वामिनाऽपि–'मार्ष मारिष इत्यपि, यथा पर्षत् परिषत्' [ अमरटीका १।६।१४ ] इति टीकायां विवृतम्। किञ्च, यो नवाक्षरः पाद उदाहरणीकृतः, सोऽपि न संगच्छते, प्रधाने कर्मण्याख्येये' इति दर्शनात्" [ गणरत्नमहोदधिः–पृ० २३८ ]।

अत्रोद्धरणे स्थूलाक्षरमुद्रितेषु पदेष्वयं विशेषः—( १ ) रजस्वान् ग्रामः, अत्र धर्मशास्त्रेष्वसकृत् प्रयुज्यमानः 'रजस्वला नद्यः' इत्यनुसन्धेयः। ( २ ) कश्चिद्ब्रूते भागवृत्तिकृदि यर्थः। ( ३ ) द्वाभ्यामपि शब्दाभ्याम्–पर्षत्परिषच्छब्दाभ्यां वलज् दर्शनादित्यर्थः। "पृषोदरादित्वादिकारलोपे एकदेशविकारद्वारेण पर्षच्छब्दादपि वलज्" इति केशवः [ भाषावृत्तिः–५।२।११२ ]। एतेन केशवमते सूत्रे 'परिषत्' शब्दो द्रष्टव्यः।

इदमप्यत्र ज्ञेयम्–भुरिक्निचृदादयो भाषायामपि प्रयुज्यन्त इति जानाश्रयीछन्दोविचितिकारो मनुते। तथाहि एकाक्षरवृद्ध्या भुरिक् [नवाक्षराणां पादः–] जनमेजयस्यराजर्षे·······वायु पु० ९९।१५॥ एकाक्षरेणोनो नृचित्–जिह्वे स्नुहि·······(श्लोके) वायु २१।८१ ॥

## ८७–किमोऽत् । ( ५।३।१२ )

( १३० ) भागवृत्तिकारस्तु भाषायामेतन्ने[1]च्छति ।

[ पदमञ्जरी–भा० २ पृ० ३३६ ]

( १३१ ) त्र[ ल ]मपि केचिदिच्छन्तीति जयादित्यः । कुत्र क्व इति रूपद्वयम् । कुत्र इत्यस्मात् तमिति (?) भागवृत्तिः ।

[ संक्षिप्तसारटीका–सुबन्त० ३२२ ]

## ८८–शीले को मलोपश्च । ( ५।३। ७१ वा० )

( १३२ ) "कुर्वन्त्येव हि तूष्णीकां राजन् गम्भीरवेपसः ।
लघवो घोषयन्त्येव न तु कुर्वन्ति किञ्चन ।।" इति भागवृत्तिः ।

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० १५२ ]

( १३३ ) तथा च भागवृत्तौ श्लोकः—
"कुर्वन्तोऽपि हि तूष्णीका राजन् गम्भीरचेतसः ।
लघवो घोषयन्त्येव न कुर्वन्ति च केचन ।।" इति ।

[ भाषावृत्त्यर्थविवृतिः[2] ]

## ८९–द्वित्रिचतुर्भ्यः सुच् । ( ५।४।१८ ) ( ? )

( १३४ ) 'न पदान्त' [ १।१।५८ ] इत्यत्र द्विर्वचन इति निर्देशाज् ज्ञापकाद् यद्यपि कृदभिहितो द्रव्यवत् प्रकाशत इत्युक्तं तन्न सर्वत्र । तेन द्विरुक्तिरित्यादौ क्रियाभ्यावृत्तिगणनाश्रयः सुच् भवत्येवेति भागवृत्तिः ।

[ ज्ञापकसमुच्चयः–पृ० ६० ]

## ९०–बहुव्रीहौ संख्येये डजबहुगणात् । ( ५।४।७३ )

( १३५ ) अत एव भागवृत्तिकृतोक्तम्—निस्त्रिंशाद्यर्थम्[3] ।

[ संक्षिप्तसारटीका–समास० २७६ ]

## ९१–शेषाद् विभाषा । ( ५।४।१५४ )

( १३६ ) 'नद्यृतश्च' इत्यतः 'शेषाद्विभाषा' इत्यत्र चकारोऽनुवर्तते । स चानुक्तसमुच्चयार्थः । तेन प्रतिषेधविषयेऽपि कः, निश्रेयस्क इति भागवृत्तिन्यासकाराभ्यामुक्तः (?) । [ संक्षिप्तसारटीका–समास० २७६ ]

---

१ 'एतत्'-पदेन 'कुत्र' इत्यस्य परामर्शः । त्रलमपि केचिदिच्छन्तीति काशिकाकारः [ ५।३।१२ ] ।

२ द्रष्टव्या–भाषावृत्तिः–पृ० ३४४ टि० ।

३ अत्र–'डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशार्थम्' इति, 'अव्ययादेरिति वक्तव्यम्' इति च वार्तिकमनुसन्धेयम् ।

## ९२–सन्यङोः । ( ६।१।९ )

( १३७ ) भागवृत्तिकारस्त्वाह—"पूर्वसूत्रे [ ६।१।८ ] धातोरनभ्यासस्येति द्वयमपि प्रत्याख्याय भाष्यकारेणोक्तम्—'तिष्ठतु तावत् सांन्यासिकं धातुग्रहणम्' इति उत्तरार्थमिति भावः । अनभ्यासग्रहणस्य तु न किञ्चित् प्रयोजनमुक्तम्, ततश्चोत्तरार्थमपि तन्न भवतीति भाष्यकारस्याभिप्रायो लक्ष्यते । तेनात्र[1] भवितव्यमेव द्विर्वचनेन" इति [ पदमञ्जरी–भा० २ पृ० ४२६ ]

## ९३–पदन्नोमासहृन्निशसन्······६।१।६३ ॥

( १३८ ) दोष्णः दोषः, दोषभ्याम् दोर्भ्याम्, दीर्घदोष्णी दीर्घदोषी कुले निष्पष्टदोष्णः । दोष्णां बलान्मन्त्रबलं गरीयः । भागवृत्तिकृता छान्दसं वचनमित्यभ्युपगतम्, न तन्मतमाद्यानां वृत्तिकृताम्, न च चन्द्रस्य । स्मार्ताश्च भाषायामपि प्रयुक्तवन्तः ।

[ कातन्त्रपरिशिष्टवृत्ति सूत्र १६ नामप्रकरणे ]

---

१ 'लोलूय + सन्' इत्यत्र । अयं भावः—अनभ्यासस्येति प्रत्याख्यानाद् यङन्तात् सनि भवितव्यमेव द्विर्वचनेन । तेन लोलूयतेः सनि 'लुलोलूयिषते' इति रूपं भागवृत्तिकारमत इष्टमिति गम्यते । वस्तुतो भागवृत्तिकारमतं चिन्त्यम् । नह्यभ्यासस्य पुनर्द्विर्वचनमिच्छन्त्याचार्याः । 'स्तौतिण्योरेव' ( ८।३।६१ ) सूत्रभाष्ये यङन्तात् सनि "सोषुप्यतेः सन् सोषुपिषते" इत्युदाह्रियते । तेन ज्ञायते न पुनर्द्विर्वचनं भवतीति । इदमत्रावधेयम्–चान्द्रभोजव्याकरणे विहायान्येष्वर्वाचीनव्याकरणेष्वेकेषां मतेनाभ्यासस्य पुनर्द्वित्वमुच्यते । यथा—"चस्यैके, च ( अभ्यास ) संज्ञकस्य द्वे न स्त इत्येके, लोलूयिषते । अस्त्येवेत्यपरे, लुलोलूयिषते' इति शब्दार्णवचन्द्रिकाकारः [४।३।५] । "द्विरेकेषाम्" इति जैनशाकटायनम् [ ४।१।५० ] । "द्विरुक्तस्य द्विर्वचनं न भवतीत्यर्थः । लोलूयिषते, पोपूयिषते । अन्येषां भवति—सुसोषूयिषते, प्राणिणिनिषते" इति तस्य चिन्तामणिवृत्तिः । "पुनरेकेषाम्" इति हैमव्याकरणम् [ ४।१।१० ] । "एकेषां मते द्वित्वे पुनर्द्वित्वं स्यात्" इति तदीया लघ्वी वृत्तिः । यङन्तात्सनि बोभूयिषते 'पुनरेकेषाम्' ( ४।१।१० ) इति पुनर्द्वित्वे बुबोभूयिषते इति क्रियारत्नसमुच्चयकारः [ पृष्ठ ३२ ] । चन्द्रस्तु-"पुनः' [ ५।१।६ ], यद्द्विरुक्तं तत् पुनर्न द्विरुच्यते । जुगुप्सिषते, लोलूयिषते" इति स्पष्टं पुनर्द्विर्वचनं प्रतिषिद्धवान् । भोजोऽपि चान्द्रमतमनुससार । यत्तु भोजव्याकरणसूत्रसम्पादकेन–'अयि रः' 'पुनः' इति द्वे सूत्रे एकीकृत्य मुद्रापिते तदयुक्तम् ।

## ९४–धात्वादेः षः सः । ( ६।१।६४ )

### अजदन्त्यपराः सादयः षोपदेशाः स्मिङ्स्वदिस्विदिस्वञ्जिस्वपयश्च, [1]सृपिसृजिस्तृस्त्यासेक्रुसृवर्जम् [ महाभाष्यम् ]।

( १३६ ) भागवृत्तौ तु 'सीक्रुसेक्रु' इत्यधिकमपि पठ्यते[2]। तच्च 'सीकृ सेचने' इति श्रीधरो[3] व्याकरोत् । 'एतानष्टौ वर्जयित्वा' इति चाधिक्यं मुक्तकण्ठमुक्तवान्[4] । [ दैवस्य पुरुषकारटीका–पृ० १४, १५ ]

## ९५–णो नः । ( ६।१।६५ )

( १४० ) 'न' इति प्रायो न [5]पठन्ति ( भागवृत्तिकारादयः ) । तथा च [6]श्रीधरो नत्यागेन नृत्यादीन् पठित्वा 'एतान् सप्त वर्जयित्वा' इत्याह ।

[ दैवस्य पुरुषकारटीका–पृ० ६० ]

( १४१ ) [7]भागवृत्तौ तु नाधृधातुरपि णोपदेशः पठ्यते ।

[ संक्षिप्तसारटीका–तिङन्त० १७६ ]

---

१ सृपिसृजिस्तृस्त्यासेक्रुसृवर्जम्.........'स्तृ' इति ह्रस्वान्तं केचिन्न पठन्ति । तथा च 'स्तृञ् छादने' इति दीर्घान्तमेव जिनेन्द्रादयः प्रायः पठन्ति । श्रीधरस्तु–"स्तॄञ् छादने दीर्घः, स्तृञ् छादने ह्रस्वः" इत्युभावप्युपन्यास्थत [ दैवस्य पुरुषकारटीका–पृ० १४ ] । एतेन श्रीधरमते–'सृपिसृजिस्तृस्तस्त्यासीक्रुसेक्रुसृवर्जम्' इति भाष्यपाठो द्रष्टव्यः ।

२ पुरुषकारेण भागवृत्तिकारोक्तः 'सीक्रु'-पाठः प्रत्याख्यातः । तथा हि—"तत्र चाद्यः पक्षः शीकर इति प्रयोगानुगुणः । योऽपि षोपदेशलक्षणे सीक्रुपाठ उक्तः सोऽप्येवमेव प्रत्युक्तः [ दैवस्य पुरुषकारटीका–पृ० ४२ ] ।

३ श्रीधरो भागवृत्तेर्व्याख्याता । [ द्र० संस्कृत व्याकरणशास्त्र का इतिहास भाग १, पृ० ४३५ द्वि सं० ] ।

४ श्रीधर इति शेषः ।

५ महाभाष्ये—"सर्वे नादयो णोपदेशाः, नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनववर्जम्" इत्यत्र नधातुरपि पठ्यते । तं भागवृत्तिकारादयो न पठन्तीति भावः ।

६ श्रीधरो भागवृत्तेर्व्याख्याता । माधवीयधातुवृत्तौ–"नृतिनन्दिवाक्ये नाधृवर्जं नृत्यादीन् पठित्वैतान् सप्त वर्जयित्वेति वदन् श्रीकरो ( क्वचित् श्रीकारो ) ऽप्यत्रैवानुकूलः ।" [ पृ० ३८, नाधृधातौ ] इति । अत्र श्रीकरः श्रीकारो वा पाठः श्रीधरस्यैवापभ्रंश इति प्रतीयते ।

७ यथा तु धातुवृत्तिपाठस्तथा भागवृत्तौ 'नाधृ'-धातुर्णोपदेश इति न शक्यते वक्तुम् । मैत्रेयाभरणकारौ नाधृधातुं णोपदेशं मन्येते, नान्ये वैयाकरणाः ।

## ९६–दिव उत् । ( ६।१।१३१ )

( १४२ ) "बहुलवचनात् केवलादपि [1]कनिन्निति । तेन दिवौकस इत्यत्र वृद्धिर्भवति" इति 'दिव उत्' [ ६।१।१३१ ] इत्यत्र भागवृत्तिः ।

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० ५८ ]

( १४३ ) "कनिन्प्रत्ययान्तेन दिवा ओको येषाम्" इति भागवृत्तिः ।

[ दुर्घटवृत्तिः–पृ० ९७ ]

( १४४ ) यद्यपि दिवर्थे दिवमिति निश्चितम्, तथाप्योकारनिवृत्त्यर्थमाह–दिवौकसः । तथा च भागवृत्तिकृता विमलमतिनाप्येष निपातितः ।

[ कातन्त्रपरिशिष्टवृत्तिः–सन्धि० १४२ ]

## ९७–अपरस्पराः क्रियासातत्ये । ( ६।१।१४४ )

( १४५ ) "सूत्रार्थे केचिदनुस्वारस्य च लोपमिच्छन्ति । मास्पचनम्, मास्पाक इति । तत्तु तन्त्रभाष्यवाक्यस्याभावात् सन्दिग्धम्" इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० ३३९ ]

## ९८–स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ( ६।३।३४ )

( १४६ ) दृढभक्तिरित्यादि त्वविवक्षितस्त्रीत्वात्, पूर्वपदस्य "आर्षत्वात्" इति भागवृत्तिः । [ संक्षिप्तसारवृत्तिः–समास० ४१९ ]

## ९९–जातेश्च । ( ६।३।४१ )

( १४७ ) अमानिनीत्येव–कठमानिनी । 'कठीमानिनी' इति भागवृत्तिः ।

[ संक्षिप्तसारवृत्तिः–समास० ४३६ ]

( १४८ ) अत्र टीकाकारः—कठीमानिनीति भागवृत्तिरित्यमानिनीत्यस्यानुवृत्तिमसौ नाङ्गीकरोति । [ संक्षिप्तसारटीका–समास० ४३६ ]

## १००–इको ह्रस्वोऽङ्यो गालवस्य । ( ६।३।६१ )

( १४९ ) "अद्भ्य उत्तारक उदपः ( उडूपः ) प्लवः । 'ऊदनोर्देशे' [ ६।३।९८ ] इति दीर्घनिर्देशादन्यत्रापि भवति" इति 'इको ह्रस्वोऽङ्यो गालवस्य' [६।३।६१] इत्यत्र भागवृत्तिः । [ उज्ज्वलदत्तस्य–उ० वृ० पृ० ८१ ]

( १५० ) "भ्रुवोर्भङ्गो भ्रभङ्गो भ्रुभङ्गो भ्रूभङ्गश्चेति रूपत्रयम् । 'भ्रूकुंसादीनामकारो वा' [ ६।३।६१ वा० ] इत्यकारह्रस्वौ, पक्षे दीर्घ एवावतिष्ठते ।" एतत्सर्वम् 'इको ह्रस्वः' [ ६।३।६१ ] इत्यत्र भागवृत्तिः ।

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० ८४ ]

---

१ 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' [ उ० १।१४२ ] इति सूत्रेणेति शेषः ।

## १०१–समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु । ( ६।३।८४ )

( १५१ ) इह समानस्येति योगविभागः, तेन सपक्षसधर्मसजातीयाः सिद्ध्यन्तीति वामनवृत्तिः । "अनार्षोऽयं योगविभागः । तथा ह्यव्ययानामनेकार्थत्वात् सदृशार्थस्य सहशब्दस्यैते प्रयोगाः । कथं नाम समानपक्ष इत्यादयोऽपि भवन्ति"[1] इति भागवृत्तिः । [ भाषावृत्तिः–पृ० ४२० ]

( १५२ ) "अव्ययानामनेकार्थत्वात् सहशब्दस्य समानार्थस्य सभावे सपक्षः, समानशब्दे तु समानपक्षः" इति भागवृत्तिः ।

[ दुर्घटवृत्तिः–पृ० १०० ]

( १५३ ) एवम्–"सपक्षः सधर्मा सजातीयः" इति भागवृत्तिः ।

[ संक्षिप्तसारवृत्तिः–समास० ४७३ ]

## १०२–विभाषा पुरुषे । ( ६।३।१०६ )

( १५४ ) "ईषदर्थे च वा" इति भागवृत्तिः । ईषत्पुरुषः, कुपुरुषः, कापुरुषः[2] । [ संक्षिप्तसारवृत्तिः–समास० २४८ ]

## १०३–अन्येषामपि दृश्यते । ( ६।३।१३७ )

( १५५ ) दृशिग्रहणादिह पूरुषो नारक इत्यादावप्ययं दीर्घ इति वामनवृत्तिः । "अनेनोत्तरपदे विधानादप्राप्तिरिति पूरुषादयो दीर्घोपदेशा एव संज्ञाशब्दाः" इति [3]भागवृत्तिः । [ भाषावृत्तिः–पृ० ४२७ ]

---

१ अत्र कश्चित् पाठस्त्रुटितः प्रतिभाति । अस्यायं भावः—सहशब्देन समासे तस्य सादेशे सपक्षसधर्मादयो भविष्यन्ति, समानशब्देन समासे समानपक्षसमानधर्मादय इति ।

२ पुरुष उत्तरपदे ईषत्पुरुष इत्यपीष्यत इति भागवृत्तिकारमतं स्यात् । तथा सति विभाषापदमुभयोः शेषं इति द्रष्टव्यम् ।

३ सर्वत्र भाष्यैकशरणः सन्नप्यत्र भागवृत्तिकारो भाष्यमतमुपेक्षितवान् । भाष्ये तु–"बहुलं छन्दसि दीर्घत्वं दृश्यते । तद्यथा पूरुषः नारकः" [ ६।४।७४ ] इति, "येषामपि दीर्घत्वं नारभ्यते तेषामपि छन्दसि दीर्घत्वं दृश्यते । तद्यथा–पूरुषः नारकः" इति चासकृत पठ्यते । वस्तुतस्तु–"पूरुषादयो दीर्घोपदेशा एव संज्ञाशब्दाः" इति भागवृत्तिकारमतमेव युक्तम् । भाषायामप्येषां बहुत्र प्रयोगदर्शनात् । "छन्दोवत् कवयः कुर्वन्ति" इति त्वगतिका गतिः [ द्र० सं० व्या० शास्त्र का इतिहास–पृ० ४२ द्वि० सं० ] वस्तुतस्त्विमे छान्दसा इमे लौकिका इत्ययं विभागस्त्वत्यतिपुरा नासीदेव । सर्वेषामेव छान्दसत्वेनाभिमतानामतिपुरातनकाले लोकेऽपि प्रयोग आसीदेव । [ द्र० सं० व्या० शास्त्र का इतिहास–पृ० ४-५३ द्वि० सं० ] काशकृत्स्नधातुपाठस्यकन्नडटीकायाम् पुरुष पूरुष इत्युभययोः साधुत्वमुच्यते [ पृष्ठ १७६ ] ।

## १०४–दम्भेरेत्वं वक्तव्यम् । ( ६।४।१२० काशिका )

## १०५–श्रन्थेश्चेति वक्तव्यम् । ( ६ ४।१२२ काशिका )

## ( चकारस्यानुक्तसमुच्चायकत्वाद् ग्रन्थेरपि )

( १५६ ) 'दम्भिश्रन्थिग्रन्थीनां नलोपश्च' [संक्षिप्तसारः–तिङन्त० ८०६] वामनेनास्य नित्यत्वमुक्तम् । भागवृत्तिकृता त्वनार्षत्वमुक्तम्[1] ।

[ संक्षिप्तसारटीका–तिङन्त० ८०६ ]

## १०६–न शसददवादिगुणानाम् । ( ६।४।१२६ ) (?)

( १५७ ) भागवृत्तौ [2]त्वनयोर्विकल्पेन 'वेमतुः' इत्युदाहृतम् ।

[ धातुवृत्तिः–पृ० १४८ ( टुवमधातौ ) ]

( १५८ ) भागवृत्तौ तु 'वेमतुः'[3] इत्याद्यप्युदाहृतम् ।

[ सिद्धान्तकौमुदी–पृ० २६० ( टुवमधातौ ) ]

## १०७–अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ( ७।१।५१ )

## अश्ववृषयोर्मैथुनेच्छायाम् । ( ७।१।५१ )

( १५९ ) अश्वस्यति वडवा ....। [4]वृत्तिकृतोऽभीष्टमेतदुदाहरणम् । वामनभागवृत्तिकाराभ्यामपि दर्शितम् । [ संक्षिप्तसारटीका–तिङन्त० ५१२ ]

---

१ यत्तु भागवृत्तिकृता–"देभतुः, देभुः, श्रेथतुः, श्रेथुः, ग्रेथतुः, ग्रेथुः" इत्यादिप्रयोगाणामनार्षत्वमुक्तं तदयुक्तम् । 'देभतुः, देभुः' इति प्रयोगार्थम्–"दम्भ एत्वम्, नलोपस्यासिद्धत्वात्" इति वार्त्तिकस्य भाष्ये पठ्यमानत्वात् । वार्त्तिके–'नलोपस्यासिद्धत्वात्' इति यो हेतुरुक्तः स तदैव समर्थो भवितुमर्हति यदा–'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्' [ १।२।६ ] इति जयादित्योक्तं व्याकरणान्तरीयं वचनमभिप्रेतं स्यात् । अन्यथा दम्भेः परस्य लिटः कित्त्वाभावात् 'अनिदिताम्' [६।४।२४] इति नलोपस्य प्राप्तिरेव नास्ति, कुतस्तस्यासिद्धत्वं स्यात् ? अतो भाष्यकारस्य व्याकरणान्तरीयं सकलमपि वचनमभिप्रेतमित्येकदेशस्वीकृत्या सूचितम् । एकदेशस्वीकृत्या सकलमपि प्राचां लक्षणं स्वीकृतं भवतीति भाष्यकृता—"एवं तर्हि सिद्धे सति यदतिङ् ङिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः–अनयोर्योगयोर्निवृत्तं सुप्सुपेति । किमेतस्य ज्ञापने प्रयोजनम् ? गतिकारकोपपदानां कृद्भिः सह समासो भवतीत्येषा परिभाषा न कर्तव्या भवति" इत्यादिना ज्ञापितम् । अन्यथा 'उपपदमतिङ्' [ २।२।१९ ] इत्यत्रोपपदस्यैव श्रावणाद्गतिकारकयोर्विषये ज्ञापकमनुपपन्नं स्यात् ।

२ 'एत्वाभ्यासलोपयोः' इत्यर्थः ।

३ "वेमुश्च केचिद् रुधिरम्' [ सप्तशती २।५७ ] इत्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहुः" इति तत्त्वकौमुदी । 'वेमुश्च रुधिरं वीराः [ महाभारते भीष्म० ५७।१५ ] इति च ।

४ संक्षिप्तसारवृत्तिकृतो जुमरनन्दिन इति शेषः ।

## १०८–युजेरसमासे । ( ७।१।७१ )

(१६०) [1]'युनक्ति' इति निर्देशः 'युज समाधौ' इत्यस्य दैवकादिस्य निरासार्थः । तेन–"युजमापन्ना ऋषयः" इति भागवृत्तिकारः । केचित् सामान्यग्रहणमिच्छन्ति । [ सङ्क्षिप्तसारटीका–सुबन्त० २३५ ]

## १०९–एकाच उपदेशेऽनुदात्तात् । ( ७।२।१० )

( १६१ ) ( [2]'शक्लृ वचि [3]घसि' इत्यादयः संक्षिप्तसारीया अनिट्-कारिकाः ) 'शक्लृ शक्तौ' स्वादिः । लृकारान्तनिर्देशात् 'शक मर्षणे' इति दैवादिकस्योभयपदिनो न ग्रहणम् । वामनभागवृत्तिकाराभ्यां चायं विशेषो न व्याख्यातः । [ संक्षिप्तसारटीका–तिङन्त० ७०४ ]

( १६२ ) ज्ञानार्थलाभार्थविदो इङ् ( इट् ) एव भवतीति जयादित्य-जिनेन्द्रविनीतकीर्तिनां मतम् । तत्र वामनभागवृत्तिकृतोः स्वरसः ।

 [ संक्षिप्तसारटीका–तिङन्त० ७०४ ]

## ११०–घुषिरविशब्दने । ( ७।२।२३ ) (?)

( १६३ ) ····भागवृत्तिकारा घुषिं शब्दार्थं [4]पेठुः ।

[ धातुवृत्तिः–पृ० ११६ ( घुषिर् धातौ ) ]

( १६४ ) घुषिर् ····शब्दार्थ इति तु क्षीरस्वामिधनपालभागवृत्ति-काराः । [ दैवं पुरुषकारश्च–पृ० १०२ ]

## १११–स्नुक्रमोरनात्मनेपदनिमित्ते । ७।२।३६ )
## क्रमेः कर्तर्यात्मनेपदविषयात् कृति प्रतिषेधः । ( ७।२।३६ वा० )

( १६५ ) कथम्–'चिक्रंसया कृत्रिमपत्त्रिपङ्क्तेः' इति माघः [ ३ । ५१ ], क्रमेरनात्मनेपदनिमित्तत्वादिट्प्रसंगात् । उच्यते, तर्ह्ययमनित्यत्वा-

---

१ संक्षिप्तसारे–'युनक्तेरसमासे' इति सूत्रपाठः । तत्पदं निर्दिशति–'युनक्ति' इति ।

२ 'शकिस्तु कान्तेष्वनिडेक इष्यते' इत्यनिटकारिकाव्याख्यान इति शेषः ।

३ 'विद्यति विन्त इत्यपि' इत्यनिट्कारिकाव्याख्यान इति शेषः । अत्र श्यना श्नमा च निर्देशाद् ज्ञानार्थकस्य वेत्तेर्लाभार्थकस्य विदन्तेरिट्प्रतिषेधो न भवति ।

४ "····भागवृत्तिकाराः–'घुषिरविशब्दनार्थः' इति पेठुः' इति पाठान्तरं मैसूर-मुद्रितायाम् [ धा० वृ० भा० २ पृ० ३७० ] । तच्चासम्यक्, क्षीरतरङ्गिण्यां 'घुषिर् शब्दार्थः' इत्यस्यैव पाठस्य दर्शनात् ।

न्नेट। "ग्रहे [1]जिघृक्षयेति पाठः" इति भागवृत्तिः। जिघांसयेति वा पाठः।
[ दुर्घटवृत्तिः–पृ० ११३ ]

( १६६ ) कथम्–'चिक्रंसया कृत्रिमपत्त्रिपङ्क्तेः' इति माघः [ ३। ५१ ] आत्मनेपदस्य कर्तरि कृतश्चाभावाद् इडा ( इटा ) भवितव्यम्। अनन्तरमयं नाटीनां (?) प्रमादपाठः। "प्राच्यास्तु[1] 'जिघत्सया' इति पठन्ति" इति भागवृत्तिः। [ संक्षिप्तसारटीका–तिङन्त० ७१७ ]

## ११२–किरश्च पञ्चभ्यः। ( ७।२।७५ )

( १६७ ) 'वतो वा' [ ७।२।३८ ] इत्यस्येटो दीर्घो नेहास्तीति वामनवृत्तिः। "अस्तीति" भागवृत्तिः। [ भागवृत्तिः–पृ० ४८२ ]

( १६८ ) भागवृत्तौ त्वत्रापि दीर्घविकल्पो दृश्यते।
[ धातुवृत्तिः–पृ० ३३८ ( कृधातौ ) ]

## ११३–त्यदादीनामः ( ७।२।१०२ )

( १६९ ) स्यश्छन्दसि बहुलम्' [ ६।१।१३३ ] इति पाणिनिलक्षणे छन्दोग्रहणादनुमीयते भाषायामपि स्यो भवतीति। तथा हि–'त्यदादीनाम् अ विभक्तौ' इति सर्ववर्मा, [2]त्यदादीनामच्छन्दोविहित आदेशः' इति चन्द्रः। तस्मात्–"स्य इति छान्दसम्" इति भागवृत्तिकारस्य भ्रमः।
[ संक्षिप्तसारटीका–सुबन्त० २८५ ]

## ११४–नोदात्तोपदेशस्य मान्तस्यानाचमेः। ( ७।३।३४ )

( १७० ) विश्रामः—चन्द्रोऽत्र नित्यां [3]वृद्धिमाह। भागवृत्तिकारस्तु नित्यं वृद्ध्यभावः। वेः श्रमेर्वेति (वर्धमानः)। [ संक्षिप्तसारटीका–सन्धि० ६ ]

( १७१ ) विश्राम शब्दः साधु मन्यते। तथा च भागवृत्तिकारोऽपि विश्रामशब्दस्य साधुत्वमुक्तवान्[4]। [ [5]तन्त्रप्रदीपः ७।३।३४ ]

---

१ दुर्घटवृत्तिकारो भागवृत्तेर्मते 'जिघृक्षया' इति पाठमाह, संक्षिप्तसारटीकाकृत्तु 'जिघत्सया' इति। कोऽत्र शुद्धः पाठ इति न शक्यते निश्चेतुम्।

२ 'त्यदां तसादिषु चा दूवे रः' इति चान्द्रं सूत्रम् [ ५।४।६८ ]।

३ 'मः सेटो नावम्यमिकमाचमकिवश्रमः' [ ६।१।४२ ] इत्यत्र विश्रमः पर्युदासात्। वामनस्तु–'सूर्यविश्रामा भूमिः' इत्यादिकमन्याय्यं मन्यते। 'वेः श्रमेर्वा' इति वर्धमानः। विश्रमः, विश्रामः। क्वचित् 'वौ श्रमेर्विभाषा इति वाक्यकारवचनमुच्यते [ द्र० मञ्जूषापत्रिका ( कलकत्ता ) वर्ष ४, अङ्क १, पृष्ठ १६ ] तच्चिन्त्यम्। वाक्यकारपदेन वार्तिककारः कात्यायन उच्यते। तस्य च न क्वचिदेतादृशं वचनम्।

४ पूर्वोद्धरणे भागवृत्तिकारमते विश्रामशब्दस्यासाधुत्वमुच्यते। इह तु तन्मुखेनैव तस्य साधुत्वम्। किमत्र तत्त्वमिति देवा ज्ञातुमर्हन्ति।

५ वचनमिदं पुरुषोत्तमदेवीयपारिभाषावृत्तिभूमिकायां नवमे पृष्ठ उद्धृतम्।

(१७२) "'यथालक्षणमप्रयुक्ते' [महाभा० १।१।२४] इति 'उपराम उद्यामः' इत्येव भवतीति" भर्तृहरिणा भागवृत्तिकृता चोक्तम्।

[दुर्घटवृत्तिः–पृ० ११७]

## ११५–यङो वा। (७।३।९४)

(१७३) [1]"यङ्लुक् छान्दसः" इति भागवृत्तिः।

[भाषावृत्तिः–पृ० ५०३]

## ११६–ह्रस्वस्य गुणः। (७।३।१०८)

(१७४) कथम्–'सुतनु, सत्यमलङ्करणाय' इति माघः [६।१७], 'सुतनु, जहिहि कोपम्', तथा–'वरतनु, संप्रवदन्ति कुक्कुटाः' इति च? अनेन गुणप्राप्तेः।.....उच्यते—कृषिचमितनिधनिसर्जिखर्जिभ्यः ऊः' [उ० १।७८] इति ऊप्रत्ययान्तस्तनूशब्दोऽप्यस्ति। 'स्त्रियां मूर्तिस्तनुस्तनू' [२।६।७१] इत्यमरः। तत्प्रयोगे–'अम्बार्थनद्योर्ह्रस्वः' [७।३।१०७] इति ह्रस्वविधानसामर्थ्यान्न गुण इति। यदि हि स्यात्, 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इति कृतं स्यात्" इति भागवृत्तिः।

[दुर्घटवृत्तिः–पृ० ११९]

(१७५) 'हे कर्तृकुलम्' इत्यत्र गुणो न भवतीति[2] भागवृत्तिः।

[संक्षिप्तसारटीका–सुबन्त० ८]

## ११७–प्रकारे गुणवचनस्य। (८।१।१२)

(१७६) जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यत इति। ननु सादृश्यं नैव 'प्रकारवचने जातीयर्' [५।३।६९] इत्यत्र प्रकारशब्देन गृहीतम्, अपि तु भेदः। तत्र भिन्नार्थत्वात् कुतो बाध्यबाधकभावः। तथा हि–पटुजातीय इत्यत्र पटुत्वमस्य पुरुषस्य विशेषः पुरुषत्वसामान्यादित्यर्थ इत्युक्तम्। नैतत्। इह टीकाकारैर्हि प्रकारवचने जातीयरित्यत्र स्थितस्य प्रकारशब्दस्यार्थं प्रति मतभेदः प्रदर्शितः। केचिदाहुः–सादृश्यं भेदश्च प्रकारशब्देन गृह्यते, अन्ये तु सादृश्यम्, अन्ये तु भेद इति। तत्र येषां दर्शनम्–उभयथा गृह्यत इति, तेषां मते बाध्यबाधकभाव आशङ्कितो [3]वामनेन। येषां तु भेदः, तन्मते नैव बाध्यबाधकभावो भिन्नार्थत्वात्।

---

१ कदाचिदयं पाठः 'यङोऽचि च' [२।४।७४] इति सूत्रादुद्धृतः स्यात्। तत्सूत्रं द्रष्टव्यम्।

२ द्रष्टव्या भाषावृत्तिः—कथं हे कर्तृकुलम्? नद्यपेक्षस्य ह्रस्वस्य ग्रहणात् [७।३।१०८]।

३ द्रष्टव्या काशिका [८।१।१२]।

येषां सादृश्यम्, तेषां वचनात् पक्षे सोऽपि जातीयर्भवति। यदुक्तं [ ?, तदुक्तं] भागवृत्तौ–"जातीयरोऽप्ययमेव विषय इति सोऽपि पक्षे भवति" इति। येषां तु भेदः, तन्मताश्रयणेन तत्र जयादित्येनोक्तम्–प्रकारो भेद [1]इति। [ [2]तन्त्रप्रदीपः–८।१।१२ ]

( १७७ ) [3]'प्रकारवति जातीयः' इत्यत्र प्रकारशब्देन भेदः सादृश्यं चोक्तम्। तत्र भेदे कृतार्थो जातीयः सादृश्ये [4]त्वेनेन बाध्यते। अत एक-विषयविहितत्वाद्बाध्यबाधकशङ्कायामाह 'जातीयश्चेष्यते' इति। भागवृत्ति-कारस्त्वाह–"जातीयोऽपि सादृश्य एव भवति" एतेन [5]विधिद्वयसमावेश उक्तः। [ संक्षिप्तसारटीका–तिङन्त० ३२२ ]

## ११८–स्त्रीनपुंसकयोरुत्तरपद······(?)। (८।१।१२वा०)

( १७८ ) समासवत्वाभावं मत्वा भागवृत्तौ तु नपुंसकेऽद्ड्डादेशो दृष्टः क्वचित् पुस्तके अन्योन्यत् इतरेतरत्। [ [6]तन्त्रप्रदीप ८।१।१२ ]

## ११९–दादेर्धातोर्घः। ( ८।२।३२ )

( १७९ ) दामलिहमिच्छतीति ईयन्तात् ( क्यजन्तादित्यर्थः ) क्विप्, दामलिहो धातुत्वेऽपि घो न भवति, गणपठितधातोरेवात्र ग्रहणादिति वामनचन्द्रादीनां मतम्। सनाद्यन्तधातोरपि ग्रहणमिति भाष्यकारसंमतम्, तस्माद् घत्वेऽपि 'दामलिग्' इति भवितव्यमिति भागवृत्तिः।

[ संक्षिप्तसारटीका–सुबन्त० १३९ ]

---

१ द्रष्टव्या काशिका [ ५।३।६९ ]—सामान्यस्य भेदको विशेषः प्रकारः। इदमत्रावधेयम्—सम्प्रत्युपलब्धायाः काशिकावृत्तेराद्याः पञ्चाध्याया जयादित्यवि-रचिताः, अपरे त्रयो वामनकृताः। प्रौढमनोरमायाः शब्दरत्नव्याख्यायां हरिदीक्षितः–"प्रथमद्वितीयपंचमषष्ठा जयादित्यकृतवृत्तयः, इतरे वामनकृतवृत्तय इत्यभियुक्ताः" [ भा० १, पृ० ५०४ ] इत्युक्तवान्। अस्याप्रामाण्यमस्माभिः स्वकीये–'संस्कृत व्याकरणशास्त्र का इतिहास'–नाम्नि ग्रन्थे सम्यगुपपादितम् [ द्रष्टव्यम्–पृ० ४२४-४२५ द्वि० सं० ]।

वामनजयादित्याभ्यां स्वतन्त्ररूपेणाष्टाध्याया द्वे वृत्ती रचिते आस्ताम्। अत्र पञ्चाप्रमाणान्यस्माभिः स्वकीये–'संस्कृत व्याकरणशास्त्र का इतिहास'–नाम्नि ग्रन्थे निर्दिष्टानि [ द्रष्टव्यम् पृ० ४२८-४२९ द्वि० सं० ]।

२ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे निर्दिष्टम्।

३ संक्षिप्तसारसूत्रमेतत्। पाणिनीयानां तु–'प्रकारवचने जातीयर्' [५।३।६९] इति।

४ द्विर्वचनेनेत्यर्थः।

५ जातीयर्प्रत्ययो द्विर्वचनं च।

६ उद्धरणमिदं पुरुषोत्तमदेवीय परिभाषाभूमिकायां नवमे पृष्ठे निर्दिष्टम्।

## १२०–क्विन् प्रत्ययस्य कुः । ( ८।२।६२ )

( १८० ) कथं दृग्भ्याम्, दृशेः क्विपि कुत्वम् ? "प्रत्ययग्रहणसामर्थ्यात् क्विन्प्रत्ययो यस्माद् दृष्ट इति बहुव्रीहावन्यप्रत्ययान्तादपि पदान्ते कुत्वम्" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० १२ ]

## १२१–उञि च पदे । ( ८।३।२१ )

( १८१ ) भर्तृहरिणा चास्य नित्यार्थतैवोक्ता । तथा च भागवृत्तिकृता प्रत्युदाहरणमुपन्यस्तम्—"तन्त्रे उतम्, तन्त्रयुतम्" इति ।
[ तन्त्रप्रदीपः–८।३।२१ ( द्र० न्यासभूमिका–पृ० १४ ) ]

## १२२–तिरसोऽन्यतरस्याम् । ( ८।३।४२ )

( १८२ ) 'तिरस्कृत्वा कष्टं ( ?, काष्ठं ) गतः' इत्यत्रापि कस्कादित्वम्[1] । अत्र तिरसस्तिर्यगर्थत्वेनान्तर्धानार्थाभावात्तिरोऽन्तर्धाने न श्रदादित्वम्[2], अतो न यच्[3] । भाष्यकारमतानुसारेण सूत्रकृत इदमेवाभीष्टम् । भागवृत्तिकृताऽप्येतादृशमेव व्याख्यातम् । वामनादिस्वरसेन त्वन्तर्धान एव कस्कादित्वम् ( सत्यमित्यर्थः ) ।
[ संक्षिप्तसारटीका–सन्धि० १५० ]

## १२३–सहेः साडः सः ( ८।३।५६ )

( १८३ ) ( पृतनाषाड्– ) इति संज्ञाशब्दत्वाच्छान्दसोऽपि साधुरिति भागवृत्तावुक्तम्[4] [ [5]तन्त्रप्रदीपः ८।३।५६ ]

( १८४ ) भागवृत्तिकारस्तु पृतनासाहमित्यत्रापि मूर्धन्यं नेच्छति ।
[ संक्षिप्तसारटीका–सन्धि० २४० ]

## १२४–अभिनिसः स्तनः शब्दसंज्ञायाम् । ( ८।३।८६ )

( १८५ ) 'विसर्गे वाच्ये' इति [6]भागवृत्तिकृतो मतम् । 'त्रिसर्गे वर्णे च वाच्ये' इति वामनस्य मतम् । 'अभिनिष्टानो वर्णे' [ ६।४।७३ ] इति चन्द्रमतम् । [ संक्षिप्तसारटीका–सन्धि० २७३ ]

---

१ सत्वमित्यर्थ । यत् पाणिनीयानां सत्वं तत् सक्षिप्तसारे कस्कादिपदेनोच्यते ।

२ गतिसंज्ञेत्यर्थः ।

३ ल्यब् इत्यर्थः ।

४ उत्तरोद्धरणे तु पृतनाषाहमित्यत्र भागवृत्तिकार मतेनैव षत्वाभाव उच्यते । कोऽत्र भागवृत्यभिप्रेतः पाठ इति देवा एव ज्ञातुमर्हन्ति ।

५ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठ उद्धृतम् ।

६ भागवृतिकृतो मतमेवात्र युक्तम् । तथा हि–"विसर्जनीयोऽभिनिष्ठान" इति चतुरध्याय्याः सूत्रम् । आश्वलायनगृह्येऽपि–"नाम दद्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा" [ १।१३।५ ] इति ।

### १२५–अट्कुप्वाङ्नुम्व्यवायेऽपि ( ८।४।२ )

( १८६ ) भागवृत्तिकृता प्रतिपादितं नुमः पूर्वनिपातलक्षणव्यभिचार-चिह्नात्[1] प्रेन्वनमित्यत्र णत्वाभावः, [2]क्षुभ्नादित्वाद्वा ।

[ परिभाषावृत्तिः– पृ० १२ ]

### १२६–प्रातिपदिकान्तनुम्विभक्तिषु च । ( ८।४।११ )

( १८७ ) "तत्र च पूर्वपदाधिकारः, समासे च पूर्वोत्तरपदव्यवहारः । तत्कथमिह ( प्राहिण्वदित्यत्र ) णत्वमिति न [3]व्यक्तीकृतम्" इति भागवृत्ति-कृतोक्तम् । [ परिभाषावृत्तिः–पृ० १२ ]

( १८८ ) अभक्तपक्षे पुनरेतदसुलभं स्यादिति प्रातिपदिकान्तसूत्रे नुम्ग्रहणमधिकमिति कृत्वाऽसमासेऽपि हिविधातोर्नुमि लङि प्राहिण्वन्निति णत्वार्थं भर्तृहरिणा व्याख्यातमिति [4]भागवृत्तिः ।

[ ज्ञापकसमुच्चयः–पृ० ९९, १०० ]

( १८९ ) प्राहिण्वनम् । भर्तृहरिसंमतमिदमुदाहरणम्, भागवृत्ति-कृताऽप्युदाहृतम् । अत्र णत्वं वामनादीनामसंमतम्[4] ।

[ संक्षिप्तसारटीका–सन्धि० ३२८ ]

### १२७–कुमति च । ( ८।४।१३ )

( १९० ) भागवृत्तौ तु–"'....युजाक्रीड०' [ ३।२।१४२ ] इति घिनुण-न्तमुदाहृतं वस्त्रयोगिणाविति ।"

[ तन्त्रप्रदीपः–८।४।१३ ( द्र०–न्यासः, भा० २, पृ० १११३ टि० ) ]

### १२८–अनितेरन्तः । ( ८।४।१९-२० )

( १९१ ) परेश्च । परस्य न भवतीत्येके ( पर्यनिति ) । अस्मिन् व्याख्याने 'हे प्रान्' इति रूपम् । अयमेव मुख्यः सूत्रार्थः । भागवृत्तिकृता-

---

१ 'प्रातिपदिकान्तनुम्विभक्तिषु च' [ ८।४।११ ] इति सूत्रेऽल्पान्तरस्य नुमः पूर्वनिपाते प्राप्ते तदभावलक्षणचिह्नादित्यर्थः ।

२ 'क्षुभ्नादिषु च' [ ८।४।३९ ] इति सूत्रेण ।

३ भर्तृहरिणेति शेषः [ द्र० परिभाषावृत्तिः–पृ० १२ ]

४ यथा त्वत्र सीरदेवीयपरिभाषावृत्तेः पाठस्तथा भागवृत्तिकारः–'प्राहिण्वनम्' इत्यत्र णत्वं नानुमनुते । यथा च ज्ञापकसमुच्चयकृतः पुरुषोत्तमदेवस्य संक्षिप्तसारटीका-कृतश्च पाठस्तथा भागवृत्तिकारमतेऽपि णत्वमिष्यते । एवमुभयविधमतभेदे कतमन्मतं भागवृत्तिकारस्येति न वयं विद्मः । महाभारते कर्णपर्वणि-'मानुष्यवाजिमातङ्गान् प्राहिण्वन्तं यमक्षयम्' [ [illegible] ] इति प्रयोगदर्शनाण्णत्वं [illegible] एव ।

ऽप्येतद्वैकदेशीयमतं [1]व्याख्यातम् । [ संक्षिप्तसारटीका-सन्धि० ३१५ ]

## १२९–अणोऽप्रगृह्यस्यानुनासिकः । ( ८।४।५७ )

( १६२ ) 'अण सानुनासिकः' इति वक्तव्यम् । अवसाने वर्तमानोऽण् सानुनासिको वा भवति–दधिँ दधि, मधुँ मधु, नदीँ नदी । व्यवस्थित-विभाषयाऽत्रासन्धिविषये न स्यात्–अग्नी, वायू, अमी । 'द्विवचनसिद्धा-नामीदूदेताम्' इति, 'अदसो माद् इणः' इत्यसन्धेरयं विषयः । अथवा, एतन्न वक्तव्यं छान्दसत्वात् । अत एव भागवृत्तौ भाषाभागे[2] नास्त्येतत्[3] ।

[ संक्षिप्तसारटीका–सन्धि० १६० ]

## अनिश्चितस्थानानि

( १६३ ) भागवृत्तिकृता तु–'पक्षामूलत्यपान्तनमीषाते' (?), तन्मेतन शेषविवक्षायां षष्ठ्यत्र । [ दुर्घटवृत्तिः–पृ० ४७ ]

( १६४ ) "उष्ट्रो राष्ट्रो भ्राष्ट्र" इति भागवृत्तिः ।

[ उज्ज्वलदत्तस्य उ० वृ० पृ० १८६ ]

( १६५ ) "पृषोदरं मेदुरं पृपत्" इति भागवृत्तिः ।[4]

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० २०६ ]

---

१ अयमभिप्रायः–'अनिरतेन्तः' इति पाणिनीयमेकमेव सूत्रम् । भाष्यकृता सूत्रमेतद् द्विधा व्याख्यातम्—"अनितेरन्तग्रहणं क्रियते सम्बुद्ध्यर्थम्, हे प्राण्" । अस्मिन् व्याख्यानेऽनितेर्धातोर्नकारो योऽन्ते ( सामर्थ्यात् पदान्ते ) वर्तते तस्य णत्वं भवतीति सूत्रार्थः । अपरम्–"यो वा तस्मादनन्तरः । अनितेः समीपे यो यो रेफस्त-स्मान्नस्य ( णत्वं ) यथा स्यात् । प्राणिति । इह मा भूत्–'पर्यनिति" इति । अस्मिन् व्याख्याने 'हे प्रान्' इत्येव प्राप्नोति, 'पदान्तस्य' [ ८।४।३७ ] इत्यनेन णत्वस्य प्रतिषेधो भवति । वृत्तिकृता वामनेन सूत्रमेतद् विभज्य व्याख्यातम् । तेन तन्मते 'हे प्राण्' इति णकार एव भवति । भागवृत्तिकारस्तु भाष्यकारीयमपरं व्याख्यानमनुसृ-तवान् । केशववृत्तौ तु विकल्प उक्तः–'हे प्राण्, हे प्रान् वा' [ द्र०–भाषावृत्तिः ८।४।२० ] ।

२ भागवृत्तिकृता पाणिनीयसूत्राणां लौकिकवैदिकविभागं कृत्वा व्याख्यानं कृतमित्यनेन स्पष्टम् । अत एवेयं भागवृत्ति नाम्ना प्रसिद्धिं गता ।

३ 'अणोऽप्रगृह्यस्यानुनासिकः' इति सूत्रमित्यर्थः ।

४ पृषोदरादि ( ६।३।१०९ ) सूत्रवृत्तावयं पाठः स्यात् ।

( १९६ ) "तन्द्री प्रमिला इति त्रिकाण्डी[1] पाठात् साधुत्वम्" इति भाववृत्तिकारः ।

[ श्वेतवनवासिनः–उ० वृ० पृ० ६३ ]

( १९७ ) ततः-"धराधरेन्द्रं व्रततीततीरिव' [ माघ० १।५ ] इत्यसाधुः" भागवृत्तिः[2] ।

[ अनिर्ज्ञातकर्तृकाऽमरटीका–मद्रास ओरियण्टल जर्नल सन् १९३२, पृ० २५३ ]

( १९८ ) अतो भागवृत्तिकृतोऽक्तोऽप्यतिप्रसंगो दुर्घट इति ज्ञेयम् ।

[ परिभाषावृत्तिव्याख्यायां रामभद्रकृतायाम् ]

**इति युधिष्ठिरमीमांसक कृतं**
**भागवृत्ति-संकलनं**
**समाप्तम्**



१ अयममरकोशाद्भिन्नः कश्चित्त्रिकाण्डीकोशः । अमरकोशे तु–'तन्द्री प्रमीला' [ १।६।३८ ] इति पाठः । 'यतस्त्रिकाण्डोत्पलिन्यादीनि नाममात्रतन्त्राणि' इति टीकासर्वस्वकारवचनादासीदमराद्भिन्नः कश्चित् त्रिकाण्डकोश इति सम्भाव्यते ।

कश्चित्त्रिकाण्डकोशो भागुरिकृतोऽप्यासीदिति पुरुषोत्तमदेववचनाज्ज्ञायते । तदुक्तम्—"'शिवतातिः, शन्तातिः, अरिष्टतातिः' अमी शब्दाश्छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्त इति त्रिकाण्डे भागुरिनिबन्धनाद्वाऽव्युत्पन्नसंज्ञाशब्दत्वाद्वा सर्वथा भाषायां साधवः" [ भाषावृत्तिः–पृ० २८९ ] इति । विवृतं च सृष्टिधरेण—"त्रिकाण्डे कोशविशेषे भागुरेरेवाचार्यस्य यदेषां निबन्धनं तस्माच्च" इति [द्र०–भा० वृ० पृ० २८९ टि० ] । यद्वाऽत्र पाठभ्रंशो द्रष्टव्यः । तथा सति अमरकोशस्यैवैतदुद्धरणं स्यात् ।

२ अत्र कदाचित् 'भागवृत्तिः' इति पाठः स्यात् ।

# परिवर्तनम् परिवर्धनम् संशोधनम्

| पृष्ठ | पं० | परिवर्तनादिकम् |
|---|---|---|
| १ | ६ | पृ० २२९ स्थाने २३६ संशोधनीयम् |
| २ | १ | (१।१।१५) ,, (१।१।२७) ,, |
| २ | २९ | १।१।६ ] ,, १।१।२६ ] ,, |
| ६ | १३ | [१।१।६४] ,, [१।२।६४] ,, |
| ७ | २८ | १।३।३१] ,, १।३।२१] ,, |
| १२ | १८ | (१।४।३१) ,, (१।४।१३) ,, |
| १७ | २१ | [दुर्घवृत्तिः ,, [दुर्घटवृत्तिः ,, |
| १९ | २६ | प्रचलतामुद्रणयन्त्रेणात्र केषुचिद् ग्रन्थेषु पाठस्त्रुटितः, स चैवं पूरणीयः— वर्तते । उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषा………… । |
| ३३ | २४ | अत्र प्रचलतामुद्रणयन्त्रेण केषुचिद् ग्रन्थेषु पाठो नाशितः । स चैवं पूरणीयः— (१४९) "अद्भ्य उत्तारक उडुपः………… । |
| ३८ | ५ | (१७२) स्थाने (१७३) संशोधनीयम् |
| ३८ | १२ | [२।६६१] इत्यमरः स्थाने इत्यमरः [२।६।७१] परिवर्तनीयम् |
| ४० | ४ | पृ० १२] स्थाने पृ० १२५ ] संशोधनीयम् |

## भूमिकायाम्

| पृष्ठ | पं० | |
|---|---|---|
| १ | टि० ७ | इत्यस्यान्ते परिवर्धनीयम्— भर्तृहरिणा भागवृत्तिकृता चोक्तम् । दुर्घटवृत्ति पृ० १११ । [ अयं पाठः पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमियायां षष्ठे पृष्ठे उद्धृतम् ] । |
| २ | टि० १ | इत्यस्यान्ते परिवर्धनीयम्— अस्मिन्नर्थे विमलामतिना संवादं दर्शयति । तथा चेत्यादिना । [ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां षष्ठे पृष्ठ उद्धृतम् ] । |



# भारतीय प्राच्यविद्या प्रतिष्ठान विक्रय विभाग

## प्रतिष्ठान द्वारा प्रकाशित तथा प्रसारित वाङ्मय

| | | | |
|---|---|---|---|
| १. | संस्कृत व्याकरण-शास्त्र का इतिहास (भाग १) | (यु० मी०) | १५-०० |
| २. | संस्कृत व्याकरण-शास्त्र का इतिहास (भाग २) | ,, | १२-०० |
| ३. | वैदिक-स्वर-मीमांसा | ,, | ४-०० |
| ४. | वैदिक-छन्दोमीमांसा | ,, | ४-५० |
| ५. | ऋषि दयानन्द के ग्रन्थों का इतिहास | ,, | ६-०० |
| ६. | काशकृत्स्न व्याकरण और उसके उपलब्ध सूत्र | ,, | १-०० |
| ७. | आचार्य पाणिनि के समय विद्यमान संस्कृत वाङ्मय | ,, | १-०० |
| ८. | ऋग्वेद की ऋक्संख्या (हिन्दी) ०-५० (संस्कृत) | ,, | ०-५० |
| ९. | मन्त्रब्राह्मणयोर्वेदनामधेयम्-इत्यत्र कश्चिदभिनवो विचारः | | ०-२५ |
| १०. | दुष्कृताय चरकाचार्यम्—मन्त्र पर विचार | ,, | ०-२५ |
| ११. | संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि | (डा० कपिलदेव एम. ए.) | ८-०० |
| १२. | संस्कृत सुभाषित सौरभ | (पं० मुनिदेव वैद्य) | २-५० |
| १३. | वैदिक वाङ्मय में प्रयुक्त विविध स्वराङ्कन प्रकार | (यु० मी०) | १-५० |
| १४. | वेदविद्यानिदर्शन | (श्री पं० भगवद्दत्तजी) | १२-०० |
| १५. | भारतवर्ष का बृहद् इतिहास (भाग १) | ,, ,, | १८-०० |
| १६. | भारतवर्ष का बृहद् इतिहास (भाग २) | ,, ,, | २०-०० |
| १७. | भाषा का इतिहास | ,, ,, | ८-०० |
| १८. | यजुर्वेदभाष्य-विवरण (भाग १) | (श्री पं० ब्रह्मदत्तजी जिज्ञासु) | १६-०० |
| १९. | दशपादी-उणादि-वृत्ति | (सं० यु० मी०) | ३-२५ |
| २०. | क्षीरतरङ्गिणी (प्राचीन धातुवृत्ति) | ,, | १२-०० |
| २१. | निरुक्त-समुच्चय (वररुचि कृत) | ,, | ५-०० |
| २२. | भागवृत्ति-संकलनम् (अष्टाध्यायी की प्राचीन वृत्ति) | ,, | ३-०० |
| २३. | काशकृत्स्न-धातु-व्याख्यानम् (कन्नडटीकायाःसंस्कृतरूपान्तरम्) | | १०-०० |
| २४. | वामनीयं लिङ्गानुशासनम्—स्वोपज्ञवृत्तिसहितम् | | २-०० |
| २५. | निरुक्त-भाष्य | (पं० भगवद्दत्तजी) | १५-०० |
| २६. | अष्टाध्यायी-भाष्य (भाग १) | (पं० ब्रह्मदत्तजी जिज्ञासु) | १२-०० |

## भारतीय-प्राच्यविद्या-प्रतिष्ठान

३१/१४४ अलवर गेट ]  [ ४९४३ रेगरपुरा गली ४०
अजमेर ]  [ करोल बाग, नई दिल्ली–५

# प्रतिष्ठानस्य भावि प्रकाशनम्

१—**काशकृत्स्न-धातु-व्याख्यानम्**—इदं व्याख्यानं काशकृत्स्नीयधातुपाठस्य कर्नाटकभाषामयीं टीकामनुसृत्य महता परिश्रमेण सम्पादितम् । अत्र स्थाने २ महत्त्वपूर्णा विविधाष्टिप्पण्योऽपि निवेशिताः एतेनास्य गौरवं वृद्धिं गतम् ।

२—**फिटसूत्रवृत्तिसंग्रहः**—अत्र बह्वीनां वृत्तीनां तासां टीकानां च संग्रहो महता परिश्रमेणकृतः । हस्तलेखसाहाय्येन च वृत्तीनां पाठाः शोधिताः । संग्रहोऽयं मुद्रणाय सज्ज एवास्ति ।

३—**पाणिनीयस्य गणपाठस्य आदर्शसंस्करणम्**

४—**काशकृत्स्न-व्याकरण-संकलनम्, विवरणसहितम्**—अस्मिन् संकलने उपसार्धशतं काशकृत्स्नव्याकरणस्योपलब्धानि सूत्राणि विस्तृतेन विवरणेन तुलनात्मकेन विमर्शेन सह प्रकाशितानि । आदौ च काशकृत्स्नव्याकरणस्य विस्तृतः परिचयोऽपि निबद्धः ।

५—**पाणिनीय-शिक्षा सूत्रात्मिका**

६—**आपिशल-शिक्षा**



७—**चान्द्र-शिक्षा**

**संस्कृत-हिन्दी-भाषामयी त्रैमासिका नवीना शोध-पत्रिका**

## प्रा च्य वि द्या

**वार्षिकमस्य मूल्यम् अष्टौ रूप्याणि ।**

**अस्यां पत्रिकायां भारतीय-प्राचीन-वाङ्मय-विषयकाः शोधपूर्णा एव लेखाः प्रकाश्यन्ते । लघूनां परमोपयोगिनां ग्रन्थानां प्रकाशनमप्यत्र क्रमशः सम्पद्यते ।**

## भारतीय-प्राच्यविद्या-प्रतिष्ठानम्

३१।१४४ अलवर गेट ] [ ४६४३ रेगरपुरा गली ४०
अजमेर ] [ करोलबाग, नई दिल्ली-५

# भारतीय प्राच्यविद्या प्रतिष्ठान विक्रय विभाग

## प्रतिष्ठान द्वारा प्रकाशित तथा प्रसारित वाङ्मय

| | | | |
|---|---|---|---|
| १. | संस्कृत व्याकरण-शास्त्र का इतिहास (भाग १) | (यु० मी०) | १५-०० |
| २. | संस्कृत व्याकरण-शास्त्र का इतिहास (भाग २) | ,, | १२-०० |
| ३. | वैदिक-स्वर-मीमांसा | ,, | ४-०० |
| ४. | वैदिक-छन्दोमीमांसा | ,, | ४-५० |
| ५. | ऋषि दयानन्द के ग्रन्थों का इतिहास | ,, | ६-०० |
| ६. | काशकृत्स्न व्याकरण और उसके उपलब्ध सूत्र | ,, | १-०० |
| ७. | आचार्य पाणिनि के समय विद्यमान संस्कृत वाङ्मय | ,, | १-०० |
| ८. | ऋग्वेद की ऋक्संख्या (हिन्दी) ०-५० (संस्कृत) | ,, | ०-५० |
| ९. | मन्त्रब्राह्मणयोर्वेदनामधेयम्—इत्यत्र कश्चिदभिनवो विचारः | ,, | ०-२५ |
| १०. | दुष्कृताय चरकाचार्यम्—मन्त्र पर विचार | ,, | ०-२५ |
| ११. | संस्कृत व्याकरण में गणपाठ की परम्परा और आचार्य पाणिनि | (डा० कपिलदेव एम. ए.) | ८-०० |
| १२. | संस्कृत सुभाषित सौरभ | (पं० मुनिदेव वैद्य) | २-५० |
| १३. | वैदिक वाङ्मय में प्रयुक्त विविध स्वराङ्कन प्रकार | (यु० मी०) | १-५० |
| १४. | वेदविद्यानिदर्शन | (श्री पं० भगवद्दत्तजी) | १२-०० |
| १५. | भारतवर्ष का बृहद् इतिहास (भाग १) | ,, ,, | १८-०० |
| १६. | भारतवर्ष का बृहद् इतिहास (भाग २) | ,, ,, | २०-०० |
| १७. | भाषा का इतिहास | ,, ,, | ८-०० |
| १८. | यजुर्वेदभाष्य-विवरण (भाग १) | (श्री पं० ब्रह्मदत्तजी जिज्ञासु) | १६-०० |
| १९. | दशपादी-उणादि-वृत्ति | (सं० यु० मी०) | ३-२५ |
| २०. | क्षीरतरङ्गिणी (प्राचीन धातुवृत्ति) | ,, | १२-०० |
| २१. | निरुक्त-समुच्चय (वररुचि कृत) | ,, | ५-[illegible] |
| २२. | भागवृत्ति-संकलनम् (अष्टाध्यायी की प्राचीन वृत्ति) | ,, | ४-[illegible] |
| २३. | काशकृत्स्न-धातु-व्याख्यानम् (कन्नडटीकाया संस्कृतरूपान्तरम्) | | १०-[illegible] |
| २४. | वामनीयं लिङ्गानुशासनम्—स्वोपज्ञवृत्तिसहितम् | | १-[illegible] |
| २५. | निरुक्त-भाष्य | (पं० भगवद्दत्तजी) | १५-[illegible] |
| २६. | अष्टाध्यायी-भाष्य (भाग १) | (पं० ब्रह्मदत्तजो जिज्ञासु) | १२-[illegible] |

भारतीय प्राच्यविद्या प्रतिष्ठान

३१/१४४ अलवर गेट
अजमेर

४९४३ रेगरपुरा गली ४०
करोल बाग, नई दिल्ली-५